तर्कामृतम्



...थगुरवे नमः ॥



...तर्कालङ्कारप्रणीतं

# तर्कामृतम्

श्रीआञ्जनेयशास्त्रिविरचित-
'माणिक्यप्रभा'-संस्कृतव्याख्याविभूषितम्

व्याख्याकारः
श्रीआञ्जनेयशास्त्री

पद्मावतीप्रकाशनम्
तिरुपतिः
( आन्ध्रप्रदेशः )

मूल्यम्—विंशतिरूप्यकाणि

॥ श्रीशिवायगुरवेनमः ॥

श्रीजगदीशतर्कालङ्कारप्रणीतं

# तर्कामृतम्

श्रीआञ्जनेयशास्त्रिविरचित-

'माणिक्यप्रभा'-संस्कृतव्याख्याविभूषितम्

व्याख्याकारः

**श्रीआञ्जनेयशास्त्री**

वैदिकदर्शनविभागाध्यक्षः

संस्कृतविद्याधर्मविज्ञानसंकायस्य

काशीहिन्दूविश्वविद्यालयस्य

वाराणसी–५

**पद्मावतीप्रकाशनम्**

तिरुपतिः

( आन्ध्रप्रदेशः )

# समर्पणम्

॥ श्रीः ॥

प्रणम्य शिरसा देवं चन्द्रशेखरमीश्वरम् ।
कामकोटिमहापीठवासिनं परमार्थदम् ॥

मणिक्यप्रभानाम्नीं तत्प्रभावविनिर्मिताम् ।
तस्यैव चरणद्वन्द्वे चार्पयाम्यर्चनासुमम् ॥

तेन प्रीणातु देवेशः श्रीनिवासः सतांगतिः ।
परमेशः कृपापूर्णः काशीवासः जगद्गुरुः ॥

॥ श्रीः ॥

महामहोपाध्याय-पण्डितराज-पट्टाभिरामशास्त्रिचरणानां

# प्रस्तावना

पवित्रतमेऽस्मिन् भारतेऽतिचिरन्तना व्यास-जैमिनि-गौतम-कणाद-पतञ्जलि-कपिला वेदसापेक्षाः मुनयः वेदनिरपेक्षाश्च मेधाविनो मनीषिणः किमिदं जगत् ? कस्मादिदं प्रावर्तिष्ट ? इति जगत्तत्त्वपरिशीलनाय प्रवृत्ताः स्वस्वप्रतिभाप्रकर्षेण नैकविधेषु स्वस्वाभिलषितं विषयमवलम्ब्य सूत्ररूपेण दर्शनानि निबबन्धुः । सर्वेषां चित्रविचित्रस्य चराचरात्मकस्य जगतः तत्त्वनिरूपणमेव प्राधान्येनोद्देश्यम् । तथापि विभिन्नान् मसृणान् पथः परिकल्प्य तेषु गच्छन्तः परममुद्देश्यं परिपूरयन्ति । तत्र 'अस्ति किञ्चित्' 'वेदाः प्रमाणम्' इति निर्द्धार्य ये गच्छन्ति ते आस्तिका वैदिका इति, ये च 'नास्ति किञ्चित्' 'वेदाश्च न प्रमाणम्' इत्यङ्गीकृत्य गच्छन्ति ते नास्तिका वेदबाह्या इति दार्शनिका विभक्ता भवन्ति । रत्नानि निकषोपले सङ्घृष्य रत्नतत्त्वनिर्णयाय ये प्रवृत्ताः परीक्षकास्तेषु नैकमत्यमवलोकयामो यथा तथैव जगत्तत्त्वपरीक्षकेष्वपि नैकमत्यं विलोकयामः । ऐकमत्याभावः तेन तेनावलम्बितप्रकार-मार्ग-भेदप्रयुक्तः ।

छात्राणामुत्तरपञ्जिकापरीक्षकेषु कश्चन प्रश्नानां उत्तराणि निर्द्धार्य तदनुसारेणोत्तराणि यदि न सन्ति तदा 'इदमुत्तरं ग्रन्थानारूढमुत्तरम्' 'इदं स्वकपोलकल्पितमुत्तरम्' इति विलिख्य न्यूनाङ्कान् ददाति, अपरश्च प्रश्नानुसारेणोत्तराणि सन्ति न वेति सुपरीक्ष्य ग्रन्थानारूढानि स्वकपोलकल्पितानि-सदुत्तराणि छात्रप्रतिभाविलसितानीति प्रशस्य पूर्णाङ्कान् प्रयच्छति । परीक्षकाणां प्रकार एव भेदः, परीक्षकत्वन्तु तुल्यमेव इति यथा, तथैव रत्नतत्त्वपरीक्षकानां जगत्तत्त्वपरीक्षकानाञ्च प्रकारः ।

तत्र गौतमकणादमहर्षिभ्यां प्रवर्तितमार्गयोर्द्रढीकरणाय पोषणाय च भाष्य-वार्तिकतद्व्याख्योपव्याख्यारूपेण मनीषिण उच्चावचान् ग्रन्थान् प्राणैषुः । चिरन्तनादेव कालाद्दार्शनिकसूत्रकारेष्वियं रीतिरनुभूयते—यत्, एकस्यैव विषयस्य विस्तरेण संक्षेपेण च प्रतिपादनम्, मीमांसाभाष्यकृतः श्रीशबरस्वामिनः प्राचीनं पद्यमुद्धरन्ति—

'विस्तीर्य हि महज्जालमृषिः संक्षिप्य चाब्रवीत् ।
इष्टं हि 'विदुषां लोके समासव्यासधारणम्' ॥ इति ।

अत्र 'ऋषिः' इति जैमिनिर्विवक्षितः, तथापि ऋष्यन्तरेष्वपि न्यायोऽयं सङ्गतो भवति । मूलप्रवर्तकैर्विस्तरेण शास्त्रे प्रणीते तस्य संक्षेपेण प्रणयनं तदुत्तरवर्तिभिः क्रियत एव शास्त्रविषयाणां विस्तरेण धारणं संक्षिप्य च धारणं पूर्वजाः कुर्वन्ति स्म ।

तत्र संक्षिप्य विषयधारणाय श्रीजगदीशतर्कालङ्कारेण प्रणीतं तर्कामृतम् । पूर्वजानाम् समासेन व्यासेन चोभयथापि विषयधारणे शक्तिरासीत्, किन्तु परिवर्तिनां तादृशशक्तेरभावेन यावद्धारणं भवेत् तदनुसारेण ग्रन्थप्रणयने प्रवृत्तिरभवत् इमां रीतिं सर्वेषु दर्शनेषु शास्त्रेषु चानुभवामः । प्रौढग्रन्थविषयाणां ग्रहणे धारणे च शक्तिमन्तः पूर्वजा आसन्, कालक्रमेणाधुनिकानां तादृशी शक्तिः क्षीणेत्यनुभूय लघुग्रन्थप्रणयने विदुषां प्रवृत्तिः । तर्कामृतं लघुग्रन्थेषु परिगणितम् किन्तु शास्त्रगतसर्वेषां पदार्थानां निरूपणपरम् । पदार्थानां प्रमाणानाञ्च निरूपणायैव न्यायशास्त्रं प्रवृत्तम् । एकैकस्य दर्शनस्य प्राधान्येन निरूपणीयो भवति एको विषयः । तत्र न्यायशास्त्रस्य प्रमाणप्रमेयनिरूपणं प्रधानम्, पदनिरूपणम् व्याकरणस्य, वाक्यनिरूपणं मीमांसायाः ।

पदवाक्यप्रमाणपारङ्गता विद्वांसो भारते बहवोऽभवन् सन्ति च । एवं लघुग्रन्थे निर्मितेऽपि तमधीत्य विषयग्रहणे क्लेशमनुभवतां छात्राणां कृते व्याख्यापि कालक्रमेण आवश्यकीति विचार्य काशीहिन्दूविश्वविद्यालये प्राच्यविद्याविभागे न्यायोपाचार्यपदमलङ्कुर्वताऽऽन्ध्रदेशाभिजनेन विदुषा श्री आञ्जनेयशास्त्रिणा 'माणिक्यप्रभा' नाम्नी व्याख्या प्रणीता । 'माणिक्य' इति स्वगुरोर्नाम्नः प्रतीकम् । अथवा जगदीशेन योऽलङ्कारो धृतः तद्रूपमाणिक्यस्य प्रभारूपेयं व्याख्या मनोहारिणी सुललितपदगुम्फिता छात्राणां विषयग्रहणे धारणे च महोपकारिकेति श्री आञ्जनेयशास्त्रिणं व्याख्यातारं धन्यवादशतेन संवर्द्धयन् ग्रन्थस्यास्य सर्वत्र प्रचारं कामये ।

वैशाखी पूर्णिमा
२०४९ वैक्रमाब्दे
( १६ मई १९९२ )

म० म० पद्मभूषणम्
पट्टाभिरामशास्त्री
वेदमीमांसानुसन्धान केन्द्र
४/७ हनुमानघाट, वाराणसी

# भूमिका

प्रदीपः सर्वशास्त्राणामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥

तादृशीयं न्यायविद्याऽऽन्वीक्षिकी वाकोवाक्यं, तर्कविद्येत्यनेकैः शब्दैर्व्यपदिश्यमाना विस्तारं भजते । अस्यां तर्कविद्यायां विश्वविख्यातौ गदाधरजगदीशौ परस्परं समानौ । तर्कामृतमिदं चकार जगदीशबुधः । इदं प्रकरणं न्यायशास्त्रे । न्यायशास्त्रीयान्यनेकानि प्रकरणानि सन्ति । तेषु तर्कसंग्रहः अन्नम्भट्टनिर्मितः आसेतुशीताचलमेवं विश्वेऽस्मिन्नपि विशिष्टां ख्यातिमवाप । परं तर्कसंग्रहादीनामपि प्रकरणग्रन्थानां शिरोधार्यं मूलभूतश्चेदं प्रकरणं जगदीशबुधविरचितं वरीवर्ति ।

तर्कसंग्रहादिकर्तृभिरन्नम्भट्टादिभिः जगदीशादिवत्-सर्वग्रन्थानां व्याख्यानं न विहितम् ।

एते तु जगदीशभट्टाचार्याः सर्वेषामपि ग्रन्थानां व्याख्यां विधाय विशिष्टं स्वप्रौढिमानमस्यां विद्यायां प्रकाशयन्ति । यथा गदाधरभट्टाचार्याणां ग्रन्थानां लोके पठनपाठनाऽऽदरः तद्वदमीषामपि ग्रन्थानाम् । तत्रापि विशिष्य पूर्ववादग्रन्थानाम् । प्रथाप्येषा श्रूयते यत् व्याप्तिग्रन्थे जगदीशस्य माहात्म्यमिति । अन्यच्च जगदीशभट्टाचार्यग्रन्थानां व्युत्पादका इति व्यवहारः । गदाधरभट्टाचार्यग्रन्थानां मोहका इति । एवंविधप्रथामनुसृत्य एतेषां शिष्याऽनुजिघृक्षया चेदं प्रकरणं शिष्यव्युत्पादनाय प्रवर्त्तितं तर्कामृताख्यम् श्रीजगदीशभट्टाचार्यैः ।

केवलं द्वित्रिस्थलानि विना तर्कसंग्रहकार एतद्ग्रन्थप्रतिपादितमंशं सर्वमपि स्वतर्कसंग्रहे निरुपयामास । अन्यच्च विश्वनाथपञ्चाननभट्टाचार्यैरपि प्रकरणग्रन्थो मुक्तावलीनामको निर्मितः । तस्य तर्कसंग्रहाध्ययनानन्तरं पठनार्थमुपादेयता । तर्कसंग्रहस्याऽनेकानि व्याखयानानि सन्ति । प्रायः त्रिंशत् संख्याकान्युपलभ्यन्त इति ।

एवमस्य तर्कामृतस्याप्यनेकानि सन्ति । परं तेषु कान्यपि न मुद्रितान्युपलभ्यन्ते । तर्कामृताख्यमिदं प्रकरणं विश्वविद्यालयेषु राष्ट्रियसंस्कृतसंस्थानविद्यापीठेषु च पाठ्यतया वर्तते ।

तिरुपतिविद्यापीठेऽयं ग्रन्थः पाठ्यतयाऽस्तीति मया पाठित आसीत् तत्र आध्यापकपदनिर्वहणकाले । तत्काले ग्रन्थालये प्राचीनं पुस्तकं सम्पाद्य तस्य छायाप्रतिं गृहीत्वा तन्निर्व्यूढमासीत् । तदा प्रभृत्यस्य किञ्चिद्व्याख्यानं विलिख्य प्रकाश्यते चेत् तदनुसारेण पठनपाठनादिकं भविष्यति । ततश्च काचिद्व्यवस्था पठनपाठनयोर्भविष्यतीत्यालोचितम् । तदनुसारेण भगवतः विश्वेश्वरस्य प्रसादादेकस्मिन् दिने तद्दर्शनसमनन्तरमेव कार्येऽस्मिन् सम्प्रवृत्तोऽचिरेणैव कालेनाऽनायासेन व्याख्यानकार्यमिदं गुरुकृपया निर्वर्तितवान् ।

कार्येऽस्मिन् बहुप्रोत्साहं प्रदत्तवद्भ्यः आप्तमित्रेभ्यः चक्रवर्तिजगदीशचतुर्वेदमहाभागेभ्यः प्रणामाञ्जलीः समर्पयामि । प्रकाशनविभागे निवृत्त्युत्तरमपि कार्यं कुर्वाणेभ्यः प्रकाशनविधाननिपुणेभ्यः डॉ० श्रीकपिलदेवगिरिमहाशयेभ्यः कार्तज्ञ्यपूर्णनमस्कारानर्पयामि ।

भगवतो लीलाविलासेनाऽविर्भूतस्यास्याल्पीयसः व्याख्यानस्य निर्माणे साहसं प्रदत्तवद्भ्यः "तर्कवेदान्तसम्राट्" दर्शनाचार्यन्यायवेदान्तशास्त्ररत्नाकरेत्यादिबहूपाधिभूषितेभ्यः ऋषिकल्पेभ्यः मम गुरुवर्येभ्यः ब्रह्मश्रीमद्दुलपल्लिमाणिक्यशास्त्रिचरणेभ्यः न्यायवेदान्तालङ्कारवेदभाष्यविशारदेत्यादि उपाधिभूषितेभ्यः ब्रह्मश्री धूलिपालरामचन्द्रशास्त्रिगुरुवर्येभ्यः नैयायिका अपि कवयो येऽष्टावधानिनः संस्कृते तेभ्यः ब्रह्मश्री दोर्बलप्रभाकरशर्मगुरुवर्येभ्यः अन्येभ्यः विद्वत्तल्लजेभ्यः गुरुभ्यो गुरुकल्पेभ्यश्च प्रणामाञ्जलीस्समर्पयामि ।

सर्वस्यापि कार्यस्य मदीयस्य प्रेरकेभ्यः निर्वाहकेभ्यः श्रीकामाक्ष्या अपरस्वरूपेभ्यः श्रीश्रीश्रीचन्द्रशेखरेन्द्रसरस्वतीगुरुचरणेभ्यः काञ्चीकामकोटिपीठाधीशेभ्यः साष्टाङ्गप्रणामसहस्रेण अल्पमिममुपहारं तेषामेव पदनलिनयोः समर्पयामि । अनेन प्रीणातु भगवान् श्रीवेङ्कटेश्वरः उमारमणः श्रीविश्वेश्वरश्च । पौरुषेये भ्रमप्रमादादिदोषाणां दुर्निवार्यतया याः काश्चन अशुद्धीः निवारयामहेऽग्रे यदि सूचयन्ति सहृदया दयालवो विद्वान्सः । अत्र दिङ्मात्रं न्यायशास्त्रीयः एकः विषयः प्रस्तूयते शब्दार्थसम्बन्धविमर्श इति शीर्षकेन ।

# शब्दार्थसम्बन्धविमर्शः

आप्तोपदेशः शब्दः स च प्रमाणान्तरमिति नैयायिकाः न प्रमाणान्तरं किन्त्वनुमान एवान्तर्भवतीति वैशेषिकाः । अत एव शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ।

अनुमानगतार्थत्वादिति वैशेषिकं मतमिति च कारिका । अत्र शब्दस्याऽप्रामाण्यमिति न व्यपदेशः । किन्तु प्रमाणस्य सतः पृथक् प्रामाण्याभाव इत्येव । ततश्च शब्दः प्रमाणमित्युभयमतसिद्धमेव । अयञ्च शब्दः पदात्मकः तं तमर्थमुपस्थापयतीति तत्तत् पदश्रवणेन तत्तदर्थावबोधादवगम्यते । स चाऽर्थः कथमस्यैव शब्दस्यार्थः । कथं वा तत्पदं तमेवाऽर्थमुपस्थापयेत् । अन्यमप्युपस्थापयेत् नामार्थमिति चेदुच्यते ।

अस्माच्छब्दादयमर्थो बोद्धव्यः, इदं पदमिममर्थंबोधयत्वित्याकारकभगवदिच्छादिरूपसम्बन्धेन सम्बद्धौ तत्तच्शब्दार्थौ तं तमर्थमुपस्थापयत इति व्यवस्था । न चेश्वरेच्छाविषयत्वं केवलान्वयीति तस्य वस्तुमात्रसाधारण्ये घटपदात् पटबोधोऽप्यविशेषाज्जायेतेति न व्यवस्थेति वाच्यम् । यादृशशब्दजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपित-यदर्थनिष्ठविशेष्यताकेच्छया भगवदुच्चरितत्वं यस्य यस्य तत्तत्पदस्य तत्तदर्थवाचकत्वमिति व्याख्यानात् न घटपदस्य पटवाचकत्वाऽऽपत्तिः, नाऽपि कस्याऽपि शब्दस्य सर्ववस्तुवाचकत्वाऽऽपत्तिरिति । उक्तंच काणादे 'सामयिकःशब्दादर्थप्रत्यय' इति । समयः ईश्वरसङ्केतः अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकः । यः शब्दः यस्मिन्नर्थे भगवता सङ्केतितः स तमर्थं प्रतिपादयति । तथा च शब्दार्थयोरीश्वरेच्छैव सम्बन्धः । स एव समयः । तदधीनः सामयिकः । तत्र दृष्टान्तो यथा नकुलदंष्ट्राग्रस्पृष्टा या काचिदोषधिः सा सर्वाऽपि सर्पविषं हन्ति ।

ननु शब्दस्य यद्यनुमानेऽन्तर्भावस्तर्हि व्याप्त्यादिज्ञानेनैव शाब्दबोधः, न तत्र शक्तेरपेक्षा लक्षणाया वा । अतोऽनुमानेऽन्तर्भावकथनाऽपेक्षया पृथक्प्रामाण्याङ्गीकार एव शब्दस्य समुचित इति तत्पक्षाश्रितानामाशयः । वात्स्यायनीयेऽपि "आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्यय" इत्येतत् सूत्रभाष्ये 'स्वर्गः अप्सरसः, उत्तराः कुरवः, सप्तद्वीपाः, समुद्रो लोकसन्निवेशः' इत्येवमादेरप्रत्यक्षस्यार्थस्य

न शब्दमात्रात् प्रत्ययः। किं तर्हि आप्तैरयमुक्तः शब्द इत्यतः सम्प्रत्ययः। विपर्यये सम्प्रत्ययाभावात्। अथवा शब्दादर्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयतेऽस्ति 'शब्दार्थसम्बन्ध' इति। अन्यथा ( सम्बन्धराहित्ये ) शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः।

अत्र महर्षेर्गौतमस्य तु मते शब्दार्थसम्बन्धो नाऽस्त्येव कारणम्। किन्तु समयमूलं शब्दार्थव्यवस्थानमिति। कः पुनरयं समयः। अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः। तस्मिन्नुपयुक्ते शब्दादर्थसम्प्रत्ययो भवति। विपर्यये तु शब्दश्रवणेऽपि प्रत्ययाभावः। सम्बन्धवादिनाऽपिचायमवर्जनीय इति। प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम्। समयपालनार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्। वाक्यलक्षणाया वाचोऽर्थो लक्षणम्। पदसमूहो वाक्यमर्थपरिसमाप्ताविति।

सामयिकः शब्दादर्थसम्प्रत्ययः न स्वाभाविकः। ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगः अर्थप्रत्यायनाय प्रवर्तते। स्वाभाविकेहि शब्दस्यार्थप्रत्यायकत्वे यथाकामं शब्दविनियोगो न स्यात्।

अत एव पदानामेवाऽर्थेषु शक्तिः पदानि च विभक्त्यन्ताः शब्दाः। तत्र घटगवादिपदानां अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु प्रयोगदर्शनात् किमन्यतमस्य पदार्थत्वमुत सर्वस्येति। प्राप्ते "या शब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः। तथाहि व्यक्तिः पदार्थः कस्मात्, या शब्दप्रभृतीनां व्यक्तावुपचारात्। या गौस्तिष्ठति या गौर्निसण्णेति नेदं वाक्यं जातेरभिधायकम् गवां समूह इति भेदेन द्रव्याभिधानमेव। एवं वैद्याय गां ददातीति द्रव्यस्य त्यागो न जातेः तस्या अमूर्तत्वात्, परिग्रहः स्वत्वेनाऽभिसम्बन्धः। स्वत्वञ्च यथेष्टविनियोगार्हत्वम्। कौण्डिन्यस्य गौः ब्राह्मणस्य गौरिति। द्रव्याभिधाने द्रव्यस्य भेदात् सम्बन्धभेद इत्युपपन्नम्। जातेरभेदात् सम्बन्धानुपपत्तिरिति। एवं संख्या दशगावः विंशतिर्गावः इति भिन्नं द्रव्यं संख्यायते। न जातिः तस्य ऐक्यात्। वृद्धिः करणवतो द्रव्यस्य अवयवोपचयः। तत्र प्रयोग इत्थम् अवर्धत गौरिति। निरवयवाजातिरितिजात्यर्थकत्वे प्रयोगोऽनुपपन्न एव। एवमपचयः। वर्णः शुक्ला गौः कपिला गौरिति। समासः गोसुखं गोहितमिति प्रयोगा अपि व्यक्तिपरका एव। अनुबन्धः— सरूपप्रजनसन्तानः गौः गां जनयति। तदुत्पत्तिधर्मत्वात् द्रव्ये

युक्तं न जातौ विपर्ययात्। एवञ्च पदानां जातिवाचकत्वापेक्षया व्यक्तिवाचकत्वमेवाऽस्त्वितिचेन्न। तदनवस्थानात्। याशब्दप्रभृतिभिः यो विशेष्यते सः गोशब्दार्थः न द्रव्यमात्रमविशिष्टं जात्याविनाऽभिधीयते। किन्तु जातिविशिष्टम्। तस्मान्न व्यक्तेः केवलायाः पदार्थत्वम्। यदि व्यक्तिः पदार्थः तर्हि कथं तवोपचारः। सहचरण-स्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यः ब्राह्मण-मञ्चकटराजसक्तुचन्दनगङ्गा शाटकान्न पुरुषेष्वतद्भावेऽपि तदुपचार इति प्रमाणं सूत्रम्।

सहचरणात् :—यष्टिकां भोजयेति यष्टिकासहचरितो ब्राह्मणोऽभिधीयते।

स्थानात् :—मञ्चाः क्रोशन्तीत्यत्र मञ्चस्थपुरुषा अभिधीयन्ते।

तादर्थ्यात् :—कटार्थेषु वीरणेषु व्यूहमानेषु कटं करोतीति।

वृत्तात् :—यमो राजा कुवेरो राजेति तद्वद्वर्तत इति।

मानात् :—आढकेन मिताः सक्तवः आढकसक्तव इति।

धारणात् :—तुलायां धृतं चन्दनं तुलाचन्दनमिति।

सामीप्यात् :—गङ्गायां गावश्चरन्तीति देशोऽभिधीयते सन्निकृष्टः।

योगात् :—कृष्णेन रागेण युक्तः शाटकः कृष्ण इति।

साधनात् :—अन्नसाधनाः प्राणाः अन्नं वै प्राणिनः प्राणा इति।

आधिपत्यात् :—अयं पुरुषः कुलं अयं गोत्रमिति। स्यादेवं यदि गौरित्यादिपदानां व्यक्त्यवोधकत्वं स्यादाऽऽकृत्यर्थकत्वम्। तदपेक्षत्वात् सत्वव्यवस्थानसिद्धेः। सत्त्वावयवानां तदवयवानां च नियतो व्यूहः आकृतिः तस्यां गृह्यमाणायां सत्वव्यवस्थानं सिद्ध्यति अयं गौरयमश्व इति। नैतदपि युज्यते यस्य जात्यायोगः तत्र जातिविशिष्टमभिधीयते गौरिति। न चावयवव्यूहस्य जात्या योगः किन्तु नियतावयवव्यूहस्य द्रव्यस्य। तस्मात् केवलमेकस्यां गवादिपदानां न शक्तिः किन्तु तिसृष्वपि। उक्तञ्चैतद्गौतमेन व्यक्त्याकृतिजातयस्तु पदार्थः इति। अत्र जात्याकृतिव्यक्तीनां प्रधानाङ्गभावस्यानियमेन समानं पदार्थत्वम्। तत्र व्यक्तिर्नाम गुणविशेषाश्रयो मूर्तिः। अथवा व्यज्यत इति व्यक्तिः इन्द्रियग्राह्येति न सर्वं द्रव्यं व्यक्तिः। यो गुणविशेषाणां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणां अव्यापिनः परिमाणस्य आश्रयो यथा सम्भवं तद् द्रव्यं मूर्तिः मूर्च्छितावयवत्वादिति। आकृतिजातिलिङ्गाख्या :—यया जातिः जातिलिङ्गानि च

प्रख्यायन्ते तामाकृतिं विद्यात्। नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम्। शिरसा पादेन गामनुमिन्वन्ति। नियते च सत्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति। जातिः समानप्रसवात्मिका या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरतो न व्यावर्तन्ते योऽर्थोनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम्।

एवं सिद्धस्य पदार्थस्य शाब्दबोधे भानाय पदपदार्थसम्बन्धावगाहिज्ञानमेव प्रयोजनकम्। स च सम्बन्धस्तावत् सङ्केतो लक्षणा चेति नैयायिकचक्रवर्ती गदाधरः शक्तिवादे। तदुक्तं सङ्केतो लक्षणा चाऽर्थे पदवृत्तिरिति। इह खलु सर्वैः शब्दैः श्रूयमाणैरपि सदा सर्वेषां न तदर्थप्रतिपत्तिः न वा सद्यः किन्तु कदाचिच्छब्दैः केषांचित् स्वल्पचिरेण जन्यते कल्प्यते च तस्मात् तत् सम्पादिनी पदपदार्थसम्बन्धविशेषधीजनितपदार्थसार्थोपस्थितिरेव। स च सम्बन्धविशेषः किं स्वरूप इति जिज्ञासूनामन्येषा च समाधानमिदम्। अत्र चकारार्थः समुच्चयः तच्च धीविशेषविषयत्वं द्वित्वं पर्यवसितम्। वृत्तिः शाब्दबोधौपयिकः सम्बन्धः। तथाचाऽर्थप्रतियोगिकः पदानुयोगिकः अर्थानुयोगिकः पदप्रतियोगिको वा तादृशः सम्बन्धः सङ्केत लक्षणाद्वयमित्यर्थः। अथ विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वस्येवावगतसामान्यधर्मावच्छिन्नानां किञ्चित्संख्याकविशेषधर्मणाभिधानस्याधिकसंख्याऽवच्छिन्नव्यवच्छेदकतयाऽपि व्युत्पत्तिसिद्धत्वेन विभाजकधर्मैस्त्रित्वादिसंख्याव्यवच्छेदो लभ्यते। स च न सम्भवति। व्यञ्जनाया अपि वृत्तित्वावश्यकत्वात् तथाहि, मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितमित्यादौ परस्परविभागजनकक्रियारूपविकासस्य मुखे बाधात् लक्षितार्थविस्तृतस्यान्वयो बोधानन्तरं मुखे कुसुमतुल्यसौरभवत्तायाः चमत्कृतिरमणीयताया वा बोधस्यानुभवसिद्धस्य ऋते व्यञ्जनामनुपपत्तेः इति चेन्न। मनसैव तत्तत्पदार्थस्य स्मृतिसहकारेण तादृशबोधनिर्वाहात्। तदर्थव्यञ्जनाया वृत्तेः कल्पनाऽनावश्यकत्वादिति हरिनाथतर्कवागीशाः। मथुरानाथास्तु गच्छगच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ममाऽपि जन्म तत्रैव भूयाद्यत्र गतो भवानित्यादौ इयं मद्गमनोत्तरप्राणवियोगवतीत्याद्यर्थानां ऋते व्यञ्जनां व्याप्तिज्ञानादिनाऽपि शीघ्रमनुपस्थापनात् वैयञ्जनिकी वृत्तिर्गीर्वाणगुरोरप्यशक्यपरिहारैवेति तदीयशब्दखण्डरहस्ये प्राचीकटन्। नीलकण्ठपण्डिता अपिमथुरानाथानामेव मतमनुसस्रुर्दीपिकाव्याख्याने श्लोकममुमेवोदाहृत्य हे प्रिय भवद्-

गमनोत्तरं मम प्राणवियोगो भविष्यति अतो न गन्तव्यमिति व्यज्यते। न ह्यत्र शक्तिलक्षणाभ्यां निर्वाहः। किन्त्वर्थशक्तिमूला व्यञ्जनाऽवश्य-मङ्गीकार्यैव। अन्नम्भट्टतर्कवागीशास्तु "व्यञ्जनाऽपि शक्तिलक्षणान्त-र्भूता शब्दशक्तिलक्षणा अर्थशक्तिलक्षणा च अनुमानादिनाऽन्यथा-सिद्धेति वदन्ति। यदि अर्थशक्तिमूलाया अनिवार्यतया स्वीकारः गच्छगच्छसीत्यादिषु किमपराद्धं शब्दशक्तिमूलया च। येषां तादृश-स्थले नाऽनुमानज्ञानं किन्तु शब्दशक्तिमूलव्यञ्जना सहकारः तत्र किं कारणमित्युभयोरन्यथासिद्धत्वं न सम्भतम्। यथा बहुप्रमाणवेद्यमेकं वस्तु तथा व्यञ्जनाया अङ्गीकारे का क्षतिः।

नचैवं तात्पर्यस्याऽपि वृत्तित्वप्रसङ्गः। उक्तश्च काव्यप्रकाशे तात्पर्यार्थोऽपि केषुचिदित्यादिना। आकांक्षायोग्यतासन्निधिवशात् वाच्यलक्ष्यव्यङ्ग्यानां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुर-पदार्थोऽपि वाक्यार्थः समुल्लसतीति अभिहितान्वयवादिनो मीमां-सकाः। तदिदं न सङ्गच्छते। यदि तात्पर्यस्य वृत्तित्वं स्वीक्रियते तदा लक्षणोच्छेदः। तथाहि गङ्गायां घोष इत्यादौ गङ्गापदं तीरं बोधयत्वित्याकारकवक्तृतात्पर्यस्य वृत्तिरूपतया तद्ज्ञानोपस्थापि-तस्य तीरादेः शाब्दबोधनिर्वाहेण किं लक्षणाया उपयोगः। अन्यच्च तात्पर्यज्ञानं साक्षादेव शाब्दबोधोपयोगि। तत्र लक्षणादिना समुपस्था-पिते एव पदार्थे प्रकरणादिना वक्तृतात्पर्यनिश्चीयते। न तु तात्पर्येण कस्यचित्पदार्थस्योपस्थितिरिति न तात्पर्यस्य वृत्तित्वम्। आधुनिक-सङ्केतितस्य नदीवृद्ध्यादिपदानां तु वृत्तिविषयत्वमनिवार्यम्।

उक्तं जात्याकृतिव्यक्तयः पदार्थ इति। तत्र शाब्दबोधे व्यक्ति आकृतिभानविर्वाहायैव तथाऽङ्गीकारः। शक्तिश्चेश्वरसङ्केतरूपा। सङ्केतः आत्मनिष्ठ एव। न तु पदपदार्थनिष्ठः। अतस्तादृशसङ्केतस्य पदपदार्थसम्बन्धत्वनिर्वाहाय अस्माच्छब्दादयमर्थो बोद्धव्यः इदं पद-मिममर्थं बोधयत्विति सङ्केताभिलापकशब्दमनुसृत्य एतत्पदजन्य-बोधविषयत्वनिष्ठप्रकारतानिरूपितभगवत्संकेतीयविशेष्यत्वं, तादृश-विशेष्यतासम्बन्धेनेच्छावत्वं वा शक्तिरिति वक्तव्यम्। घटपदजन्य-बोधविषयत्वनिष्ठप्रकारतानिरूपितं भगवत्सङ्केतीयविशेष्यत्वं घटे एव वर्तते न घटत्वसमवाययोः। तथाच कथं घटपदस्य घटघटत्व-समवायेषु शक्तिः। घटपदस्य घटत्वविशिष्टे शक्तिरित्यस्य घट-घटत्वसमवायेषु त्रिषु शक्तिरिति नैयायिकैरुक्तम्।

अत्रैवं निर्णयः। घटः घटपदजन्यबोधविषयो भवत्वितीश्वरसङ्केतो वर्तते। तादृशसङ्केते घटपदजन्यबोधविषयत्वमाश्रयतासम्बन्धेन घटे प्रकारः। घटस्तु विशेष्यः। तथाच घटपदजन्यबोधविषयतात्वावच्छिन्नाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितभगवत्सङ्केतीयविशेष्यतारूपा शक्तिः घटे वर्तते। घटपदजन्यबोधविषयता घटत्वावच्छिन्ना भवति। घटत्वञ्च घटपदजन्यबोधविषयताया अवच्छेदकं भवति। तथाच घटपदजन्यबोधविषयत्वं घटे यथा आश्रयतासम्बन्धेन प्रकारः तथा ऽवच्छेदकतासम्बन्धेन घटत्वे प्रकारः। तथाच घटपदजन्यबोधविषयकत्वावच्छिन्नाऽवच्छेदकतासम्बन्धावच्छिन्नप्रकारतानिरूपितभगवत्सङ्केतीयविशेष्यता रूपा शक्तिः घटत्वे वर्तते। अथवा घटपदजन्यबोधविषयतात्वावच्छिन्नविशेष्यतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नप्रकारत्वं वा घटत्वे शक्तिः। घटपदजन्यबोधविषयत्वं यथाऽवच्छेदकतासम्बन्धेन घटत्वे प्रकारः तथा घटपदजन्यबोधविषयतायां घटत्वमवच्छिन्नत्वसम्बन्धेन प्रकारः। समवाये तु घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नाऽवच्छेदकत्वनिष्ठसंसर्गता तादृशसंसर्गतानिरूपिताऽवच्छिन्नत्वनिष्ठाऽवच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपिताऽऽधेयतासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयत्वं शक्तिः। अत्रैवं समन्वयः। घटपदजन्यबोधविषयतावच्छेदकता घटत्वे वर्तते। साचाऽवच्छेदकता समवायसम्बन्धावच्छिन्ना। समवायसम्बन्धावच्छिन्नत्वं च समवायसम्बन्धनिष्ठसंसर्गतानिरूपकत्वम्। संसर्गता चावच्छेदकत्वाख्या। तथाच संसर्गकोटौ समवायः अवच्छेदकत्वं अवच्छिन्नत्वं चेति त्रयः पदार्थाः विशेषणतया भासन्ते। समवायनिष्ठसंसर्गतायां समवायः आधेयतासम्बन्धेन विशेषणतया भासते। तथाच घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितावच्छेदकत्वनिष्ठा या संसर्गता तदवच्छेदकमवच्छिन्नत्वम् तत्र विशेषणमवच्छेदकत्वम्। तत्र समवायः आधेयतासम्बन्धेन विशेषणम्। तथाच घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपिताऽवच्छेदकत्वनिष्ठसंसर्गतानिरूपिताऽवच्छिन्नत्वनिष्ठाऽवच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपिताऽऽधेयतासम्बन्धावच्छिन्नावच्छेदकता समवाये वर्तते।

जात्याकृतिव्यक्तयः पदार्थ इति न्यायसूत्रेण गोत्वादिजातौ

अवयवसंस्थानरूपाऽऽकृतौ गवाऽऽदिव्यक्तौ च शक्तिरभिहितेत्यवगम्यते। अत्र तु अवयवसंस्थानरूपाऽऽकृतिं परित्यज्य आकृतिशब्देन शक्यतावच्छेदकताघटकसम्बन्धमुपादाय घटपदस्य घटपटत्वसमवायेषु शक्तिः, गोपदस्य गोगोत्वसमवायेषु शक्तिरिति व्यवस्थापितम्। एवञ्च प्रवृत्तिनिमित्तलक्षणघटकीभूतवाच्यत्वविशेषणमपि सार्थकी भवति। एवं हि तत्। वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वमिति। अत्र आकाशादिशब्दस्य शब्दाश्रये स्वरूपतः शक्तिवादिनां प्राचां नये शब्दाश्रयत्वे प्रवृत्तिनिमित्तत्ववारणाय वाच्यत्वे सतीति दलोपादानम्। नव्यनये तु द्रव्यादिपदादपि घटत्वाद्युपलक्षितघटादौ शक्तिग्रहात् घटत्वादिना घटाद्युपस्थितिः जायते अतो द्रव्यादिपदानां घटत्वादौ प्रवृत्तिनिमित्तत्ववारणाय तन्निवेशः। गवाऽऽदिपदानां जात्याकृतिविशिष्टवाचकतावादिप्राचीनमते अवयवसंस्थानरूपाऽऽकृतौ प्रवृत्तिनिमित्तत्ववारणाय वाच्यवृत्तित्वमिति। अत्र वाच्यवृत्तित्वं साक्षात्सम्बन्धेनैव विवक्षितम्। नाऽतः संस्थानस्य स्वसमवायिसमवेतत्वसम्बन्धेन गवाऽऽदौ वृत्तित्वेऽपि क्षतिः। द्रव्यदधिपदादेः घटदध्यादौ प्रवृत्तिनिमित्तत्ववारणाय वाच्योपस्थितिप्रकारत्वमिति। घटादिरूपद्रव्ये अवयविरूपदध्यादौ च वाच्यत्वस्य, तद्वाच्यात्मककपालरूपावयवे दध्नि च वृत्तेश्च। वाच्योपस्थितिप्रकारत्वं नाम प्रामाण्यशक्तिज्ञानजन्या या उपस्थितिः तन्मुख्यविशेष्यताकप्रकारताश्रयत्वम्।

तत्र घटघटत्वसमवायेषु शक्तिः त्रैविध्येन भासते। तथाच घटघटत्वसमवायेषु घटपदस्यैका शक्तिरितिप्रवादः कथमुपपद्यते इत्याशङ्कायां बोधनिष्ठविषयताया ऐक्यात् शक्त्यैक्यप्रवादः न तु सङ्केतैक्यात्। एवं सति शक्यताऽवच्छेदकघटत्वस्याऽपि पदार्थत्वेन तत्र नित्यपदार्थनित्यत्वान्वये पदार्थः पदार्थेनाऽन्वेति नतु पदार्थैकदेशेनेति व्युत्पत्तिविरोधाभावात् नित्यो घट इति वाक्यस्य प्रामाण्यापत्तिः इति नाऽऽशङ्कनीयम्। तादृशव्युत्पत्तेः पदार्थः पदजन्यबोधविषयतात्वावच्छिन्नाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितभगवत्सङ्केतीयविशेष्यतावान्। पदार्थेन पदजन्यबोधविषयतात्वावच्छिन्नाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितभगवत्सङ्केतीयविशेष्यतावत्ता न तु पदार्थैकदेशेन। पदजन्य-

बोधविषयतात्वावच्छिन्नाऽवच्छेदकतासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावताऽन्वेति । इत्यर्थंकरणात् । घटत्वाद्युपलक्षितः द्रव्यपदवाच्य इति ज्ञानात् घटत्वप्रकारकशाब्दबोधावारणाय घटत्वविशिष्टः घटपदवाच्य इति ज्ञानात् कालिकेन घटत्वप्रकारकशाब्दबोधवारणाय च तत्सम्बन्धेन तद्धर्मप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्सम्बन्धेन तद्धर्मं धर्मितावच्छेदकीकृत्य तत्पदवाच्यत्वावगाहिज्ञानं कारणम्। तथाच घटो घटपदवाच्य इत्याकारकज्ञानात् न कालिकेन घटत्वप्रकारकशाब्दबोधापत्तिः नवा घटत्वोपलक्षितः द्रव्यपदवाच्य इत्यत्र घटत्वप्रकारकशाब्दबोधापत्तिर्वा सम्भवति। घटघटत्वसमवायेषु त्रिषु शक्त्यवगाहिज्ञानस्यैव समवायेन घटत्वप्रकारकघटविशेष्यताकशाब्दबुद्धिं प्रति कारणत्वात् ।

अत्र कार्यकारणभावश्चेत्थम् ।

समवायेन घटत्वप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति घटपदजन्यबोधविषयतात्वावच्छिन्नाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितभगवत्संकेतीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपितघटनिष्ठमुख्यविशेष्यताशालिज्ञानम् ।

घटपदजन्यबोधविषयतात्वावच्छिन्नाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नाऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वत्वावच्छिन्नप्रकारतानिरूपितघटत्वनिष्ठमुख्यविशेष्यतानिरूपकं ज्ञानम् ।

घटपदजन्यबोधविषयतात्वावच्छिन्नाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्ना याऽवच्छेदकत्वसम्बन्धावच्छिन्ना प्रकारता तन्निरूपिता याऽवच्छेदकत्वनिष्ठा संसर्गता तादृशसंसर्गतानिरूपितावच्छिन्नत्वनिष्ठाऽच्छेदकतानिरूपितावच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपिताऽऽधेयतासम्बन्धेनाऽवच्छेदकतानिष्ठप्रकारतानिरूपकं समवायनिष्ठविशेष्यतानिरूपकं ज्ञानं कारणम् ।

समवायेन घटत्वप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति घटपदजन्यबोधविषयतात्वावच्छिन्नेच्छीय प्रकारतावन्तः घटघटत्वसमवाया इत्येकमेव ज्ञानं कारणम् । एतादृशेच्छीयप्रकारता घटांशे स्वनिरूपितविशेष्यत्वसम्बन्धेन प्रकारः । घटत्वांशे स्वाऽवच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन । समवायांशे स्वावच्छिन्नप्रकारतावच्छेद-

कतावच्छेदकत्वसम्बन्धेन। अस्मिन् मते एकप्रकारतानिरूपितविशेष्यतात्रयनिरूपकं ज्ञानं कारणम्। यथा घटपटमठा इत्यत्र घटपटमठेषु त्रित्वं प्रकारः। घटत्वावच्छिन्नविशेष्यता पटत्वावच्छिन्नविशेष्यता मठत्वावच्छिन्नविशेष्यता चेति विशेष्यतात्रयम्। त्रित्वनिष्ठप्रकारतात्वत्र एकसम्बन्धावच्छिन्ना। तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानुभिन्नसम्बन्धावच्छिन्ना।

एवं लक्षणाऽपि शक्यसम्बन्धरूपा वृत्तिः। अन्वयाऽनुपपत्तिः तात्पर्यानुपपत्तिर्वा लक्षणाबीजम्। शक्यश्च शक्त्या बोध्योऽर्थः। गङ्गायां घोष इत्यादौ घोषस्य गङ्गाशक्यार्थप्रवाहनिरूपितवृत्तित्वं बाधितमिति गङ्गापदस्य तीरे लक्षणा एवञ्च गङ्गातीरनिरूपितवृत्तितावान् घोष इति अन्वयाऽनुपपत्त्या तदङ्गीकारः।

एवं यष्टीः प्रवेशयेत्यत्राऽन्वयानुपपत्तिरूपदोषाऽभावेन तद्वाक्यस्य भोजनतात्पर्यकत्वेनोच्चारणात् तत्र तात्पर्यानुपपत्त्या यष्टिपदस्य यष्टिधरेषु लक्षणा। समासे सर्वत्राऽपि लक्षणयैव निर्वाहः। न तत्र शक्तिरङ्गीक्रियत इति न्यायसम्प्रदायः। परमतमप्रतिषिद्धमनुमतमिति तन्त्रयुक्तिः। अन्विताभिधानवादिनस्तु पदार्थद्वयसंसर्गस्याऽपि वाच्यतां स्वीकुर्वन्ति। नैयायिकाः संसर्गांशे शक्तिमनङ्गीकृत्य तस्याऽऽकांक्षात्मर्यादया शाब्दबोधेभानमुपयन्ति।

लाक्षणिकस्य पदस्याऽपि शाब्दबोधानुभवकत्वं स्वीकरणीयम्। यदि न स्वीक्रियेत तदा धूमादिति सर्वलाक्षणिकवाक्यात् जायमानस्यानुभवस्याऽपलापप्रसङ्गः। तत्र धूमादिपदस्य ज्ञाने विभक्तेश्च ज्ञाप्यत्वे लाक्षणिकत्वम्।

मीमांसकास्तु शब्दार्थसम्बन्धश्च शक्त्याख्यो नित्यः। अत एव जातिरर्थः न व्यक्तिः अनित्यनित्यसम्बन्धायोगात्। स च सम्बन्धः अन्त्यवर्णनिष्ठः। तदुक्तं भाष्ये पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः वाचकः इति। वार्तिके तु।

अन्त्यवर्णेऽपि विज्ञाते सर्वसंस्कारकारितम्।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रवर्तते॥
तदारुढास्ततोवर्णा न दूरेऽर्थावबोधनादिति वदन्ति।

तदेतन्निरस्तप्रायं सामयिकः शब्दादर्थसम्प्रत्यय इत्यनेन। अन्यच्च न ह्यस्थिरस्य व्यक्त्यादेः नित्येन शक्त्याख्यसम्बन्धेन

सम्बन्धविरह इत्यनुपपन्नम् । अनित्यः शब्दः आदिमत्वात्, ऐन्द्रियकत्वात् कृतकवदुपचाराच्चेत्यादिना तदनित्यत्वस्य सुस्फुटत्वात् अन्यच्च शक्तिरेव सम्बन्धः तस्य जात्या सम्बन्धकल्पने तत्सम्बन्धादि प्रक्रमेणाऽनवस्थाप्रसङ्ग इति सारः ।

अन्ते च मीमांसाशास्त्रे शावरभाष्य-शास्त्रदीपिकादिग्रन्थानां बहुवार्धक्येऽपि क्लेशमविगणय्य दयया मय्युपदेशकेभ्यः गुरुचरणेभ्यः पण्डितराजपट्टाभिरामशास्त्रिचरणेभ्यः प्रकरणस्याऽस्य प्रस्तावनयाऽलंकुर्वद्भ्यश्च सप्रश्रयप्रणामाञ्जलीः समर्पयामि । सहृदयविद्वद्वर्येभ्यः ज्योतिःशास्त्रे प्रकाण्डपण्डितेभ्यः संस्कृतविद्याधर्मविज्ञानसंकायप्रमुखेभ्यः पण्डितप्रवररामचन्द्रपाण्डेयमहाभागेभ्यश्च प्रणामान्निवेदयामि । न्यायवेदान्तमीमांसाशास्त्रेष्वप्रतिहतगत्या विराजमानेभ्यः गुरुवर्येभ्यः पण्डितराज एस्० सुब्रह्मण्यशास्त्रिचरणेभ्यश्च नमस्कारान् समर्प्य धन्यमात्मानं सम्भावयामि ।

पण्डितप्रवरेभ्यः विद्वत्कविशेखरेभ्यश्च प्रो० रेवाप्रसादद्विवेदिमहाभागेभ्यश्च प्रणामाञ्जलीस्समर्पयामि । अनतिकाले अपरमुद्रणकार्यमपि निरुद्ध्य अतिशीघ्रतया समये ग्रन्थमिमं यन्त्रशक्त्या समुत्पादितवतां श्रीगोकुलमुद्रणालयाऽधिकारिणां धन्यवादान् समर्प्य विरमामि भूमिकातः ।

निर्जला एकादशी
११-६-९२

गब्बिट आञ्जनेयशास्त्री
( गौतमः )

# विषय-सूची





॥ श्रीशिवाय गुरवे नमः ॥

श्रीजगदीशतर्कालङ्कारप्रणीतं

# तर्कामृतम्

आञ्जनेयशास्त्रिविरचितं

'माणिक्यप्रभा'–संस्कृतव्याख्याविभूषितम्



मङ्गलाचरणम्

ब्रह्माद्या निखिलार्चितास्त्रिदशसन्दोहास्सदाऽभीष्टदाः
अज्ञानप्रशमाय यत्र मनसो वृत्तिं समस्तां दधुः
श्रीविष्णोश्चरणाम्बुजं भवभयध्वंसैकबीजं परं
हृत्पद्मे विनिधाय तन्निरूपमं तर्कामृतं तन्यते ॥ १ ॥

---

**माणिक्यप्रभाव्याख्या**—अथ तत्रभवान् तर्कालङ्कारः जगदीशभट्टाचार्यः स्वचिकीर्षितग्रन्थस्य प्रत्यूहनिवृत्तिपूर्वकसमाप्तये निखिलपदार्थभानाय च भगवद्विष्णुपदाम्बुजस्मरणरूपं मङ्गलमाचरति। **ब्रह्माद्येति**। ब्रह्मादयोऽपि निखिलाः सुराः सदा भक्तानामभिलषितप्रदाः स्वीयाऽविद्यानिरासार्थं भगवतो विष्णोश्चरणाम्बुजमेव ध्यायन्ति। तदेव भवभयध्वंसैकबीजं परमुत्कृष्टं श्रेष्ठं हृत्पद्मे विनिक्षिप्य ध्यात्वा तन्निरुपमं तत्तुल्यं तर्कामृतं तन्यते विस्तरीक्रियत इति। उक्तञ्च श्रुतौ "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति। इदं यत् विष्णुपदं तत् भवः संसारः स एव भयं भयभूयस्त्वात् स एव भयं तस्य ध्वंसः ध्वंसनं तस्मिन्नेकमेव कारणं नान्यत् कारणं विद्यते इत्याशयेन उक्तञ्च श्रुतौ 'नान्यः पन्था अयनाय-विद्यते' इति। तन्निरूपममित्यत्र तच्छब्देन विष्णोश्चरणाम्बुजं तेन सह नितरामौपम्यसहितं अथवा निरुपमं उपमानरहितं तत् आगौतमकणादादिभिः निर्मिततया सकललोकप्रसिद्धं तर्कामृतं तन्यते विस्तरीक्रियते अनेकेषां सुलभतयाऽध्ययनयोगप्रदानेन शास्त्राभिवृद्धिः क्रियत इत्याशयः।

पदार्थनिरूपणस्यावश्यकता—

अथ श्रुतिः श्रूयते "आत्माऽवारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति—अस्यार्थः मुमुक्षुणा आत्मा द्रष्टव्यः। मुमुक्षोराऽऽत्मदर्शनमिष्टसाधनमिति यावत्। आत्मदर्शनोपायः कः इत्यत्राह—श्रोतव्यः इत्यादि तेन आर्थक्रमेण शब्दक्रमः त्यक्तो भवति। अग्निहोत्रं जुहोति यवागूं पचतीत्यादिवत्। तथाच श्रवणमनननिदिध्यासनानि-तत्त्वज्ञानजनकानीत्युक्तं भवति। अत्र श्रुतितः कृतात्मश्रवणस्य मननेऽधिकारः।

मननञ्च आत्मन इतरभिन्नत्वेनाऽनुमानम्। तच्च भेदप्रतियोगीतरज्ञानसाध्यम्। तथाचेतरदेव कियत्? इत्येतदर्थं पदार्थनिरूपणम्।

---

भा० प्र० व्या०—आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमित्युपनिषदुक्तरीत्याऽऽत्मज्ञानेन सकलं विदितं भवतीत्यत्रगम्यते। तत्र तावदधिकारीमुमुक्षुरेव। तदुपायश्च। श्रवणमनननिदिध्यासनानि। अत्र प्रथमं दर्शनस्य तत्पश्चाच्छ्रवणमनननिदिध्यासनानां श्रुतौ कथनात् तेषाञ्च दर्शनरूपतत्त्वज्ञानप्रयोजनकत्वात् आर्थक्रमेण शब्दक्रमस्त्यक्तो भवतीत्याशयः। यथा अग्निहोत्रं जुहोति यवागूं पचतीतिशब्दक्रमेण पदार्थोपस्थितौ यवागूपचनानन्तरमेवाऽग्निहोत्रहोमस्यानुष्ठेयत्वात् शब्दक्रमं परित्यज्य आर्थं क्रमेण प्रथमं यवागूपचनं पश्चाच्चाग्निहोत्रहोमानुष्ठानं तथा।

भा० प्र० व्या०—आत्मा इतरेभ्यो भिद्यते आत्मत्ववत्त्वादित्यनुमानेनाऽऽत्मन इतरभेदसिद्धौ अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् आत्मेतरज्ञाने सामान्यतः सिद्धे अवान्तरविषयकजिज्ञासोदयात्तन्निवर्तकत्वेन पदार्थनिरूपणमिदमारब्धमितितात्पर्यम्। एवञ्च पदार्थेषु आत्मनोऽपि निरूपणात् आत्मेतरत्वेन पदार्थानां निरूपणमिदं जगदीशस्याऽसङ्गतमिति न वाच्यम्। इदञ्चाऽऽत्मज्ञानमद्वितीयाऽद्वैतपरमेवेत्यङ्गीकारात्। औपनिषदात्मनः ज्ञानरूपत्वात् नैयायिकाऽऽत्मनस्तदाश्रयरूपत्वादविरोधः। न्यायशास्त्राभिमानिनोऽपि विदुषः अद्वैतात्मनिष्ठत्वेऽविरोधात्। तर्कामृतमितिनामकरणे तावदिदमपिबीजम् आत्मनि खल्वरे दृष्टे श्रुते इत्याद्यारभ्य एतावदरे खल्वमृतत्वमित्युपसंहारात् परमपुरुषार्थभूतात्मतत्त्वस्य आत्मदर्शनोपायत्वकथनात्।

संक्षेपतः पदार्थो द्विविधः भावोऽभावश्च । भावः षड्विधः द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात् ।

जात्युपाधिप्रस्तावः—

तत्र द्रव्यत्वगुणत्वकर्मत्वानि जातयः । सामान्यत्वादीनि उपाधयः । द्रव्याणि नव पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि आकाशत्वकालत्वदिक्त्वानि उपाधयः । अन्यानि जातयः ।

कस्मिन् द्रव्ये कति गुणा इति निरूपणम्

तत्र रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपर-

---

मा० प्र० व्या०—विस्तरतः पदार्था अनेके कथिताः । तत्र न्यायदर्शने षोडशपदार्था निरूपिताः । तत्सूत्रञ्च प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां पदार्थानां तत्त्वज्ञानान्निःश्रेयसमिति । वैशेषिके च "धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमिति । तत्राऽभावविषयेऽप्युभयस्मिन्निरूपणं संदृश्यते । एवाऽञ्चैतेषां पदार्थानां सर्वेषां संक्षेपतः द्विधा विभजनं भावाऽभावभेदेन करणे सुलभतयाऽवगाह्यत इत्याशयेन तथा निरूपणम् । तत्र भावः षड्विधः । षोडशाऽपि पदार्था, यथायथं द्रव्यादिषु भावेषु अभावेषु चाऽन्तर्भवन्ति । इति सुस्पष्टं प्रतिपादितं महादेवभट्टैः ।

मा० प्र० व्या०—पदार्थेषु षट्सु भावेषु द्रव्यगुणकर्मसु विद्यमाना द्रव्यत्वगुणत्वकर्मत्वरूपा धर्मा जातयः । नित्यत्वे सत्यनेकसमवेतत्वात् । सामान्यत्वविशेषत्वसमवायत्वरूपधर्मास्तु उपाधयः । अनवस्थारूपहानि असम्बन्धरूपजातिबाधकानां सत्त्वात् । अनवस्था अप्रामाणिकाऽनन्तपदार्थकल्पनाया अविश्रान्तिः । रूपहानिर्लक्षणभङ्गः असम्बन्धः प्रतियोगिताऽनुयोगिताऽन्यतरसम्बंधावच्छिन्नसमवायाऽभावः । एवमेव नवद्रव्येष्वपि आकाशत्वकालत्वदिक्त्वरूपा धर्मा उपाधयः । जातिबाधकस्य व्यक्तेरभेदाऽऽख्यस्य सत्वात् व्यक्तेरभेदो नामस्वाश्रयव्यक्तिनिष्ठप्रतियोगिताकभेदाभावः । पृथिवीत्वादयस्त्वन्ये जातयः । तल्लक्षणलक्षितत्वात् ।

मा० प्र० व्या०—ईश्वरः कारणपुरुषकर्माऽफल्यदर्शनादिति न्याय-

त्वापरत्वगुरुत्वद्रवत्वसंस्काराः चतुर्दश गुणाः पृथिव्याम्। तत्रैव गन्धं विहाय स्नेहं विनियोज्य चतुर्दशगुणा जलस्य। रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारा एकादशगुणाः तेजसः। स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा नवगुणा वायोः। शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः षड्गुणा आकाशस्य। संख्यापरिमाणपृथक्त्वसंयोगविभागाः पञ्चगुणाः कालदिशोः। संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्दशगुणा आत्मनः। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वसंस्कारा अष्टौ गुणा मनसः। ज्ञानेच्छाकृतिसंख्यादिपञ्चकम् अष्टौ गुणा ईश्वरस्य। तथा च–

'वायोर्नवैकादशतेजसो गुणाः
जलक्षितिप्राणभृतां चतुर्दश-
दिक्कालयोः पञ्च षडेव चाम्बरे
महेश्वरेऽष्टौ मनसस्तथैव च।'

तत्र पृथिवीजलतेजोवायवो द्विविधाः परमाणवः सावयवाश्च। आकाशकालात्मदिशो विभुरूपाः। मनः परमाणुरूपम्।

नित्याऽनित्यद्रव्याणां प्रस्तावः—

तत्र सावयवा अनित्या इतराणि नित्यानि; सावयवा अपि त्रिविधाः। शरीरेन्द्रियविषयभेदात्। मानुषं शरीरं पार्थिवं, जलीयं

---

दर्शने संज्ञाकर्मत्वस्मद्विशिष्टानां लिङ्गमिति वैशेषिकदर्शने च ईश्वरसिद्धिरूपपादिता। यथा कुसुमाञ्जलावपि––

कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्योविश्वविदव्ययः॥ इति।

पृथिवीजलतेजोवायुपरमाणुष्वीश्वरेच्छावशात् क्रिया जायते। तथाच द्व्यणुकादिकार्यपृथिव्याद्युत्पत्तिर्भवतीति सूचयितुं तेषां प्रथमं द्वैविध्येन भेदं दर्शयति। तत्र पृथिवीत्यादिना।

मा० प्र० व्या०—आकाशकालात्मदिशां सर्वमूर्तसंयोगित्वात् विभुत्वम्। मूर्तत्वञ्च क्रियाऽश्रयत्वम्। परिच्छिन्नपरिमाणवत्त्वं वा। मनस्तु परमाणुरूपं क्रियाश्रयत्वात्, परिच्छिन्नपरिमाणवत्त्वाद्वा मूर्तम्।

सावयवा पृथिव्यादयः वाय्वन्ताः अनित्याः। सावयवत्वस्याऽनित्यत्वव्याप्यत्वात्। पृथिव्यप्तेजो वायुपरमाणवः आकाशकालदिगात्म-

शरीरं वरुणलोके प्रसिद्धम्। तैजसं शरीरमादित्यलोके, वायवीयं शरीरं वायुलोके।

घ्राणेन्द्रियं पार्थिवं, रसनेन्द्रियं जलीयं, चक्षुरिन्द्रियं तैजसं, त्वगिन्द्रियं वायवीयं, श्रोत्रेन्द्रियं कर्णशष्कुल्यवच्छिन्नश्रोत्रप्रदेशः–एतानि पञ्च बहिरिन्द्रियाणि। मनोऽन्तरिन्द्रियं, तेन षडिन्द्रियाणि। विषयाश्चशब्दादिरूपेण प्रसिद्धाः। आत्मा द्विविधः, जीवात्मा परमात्मा च। तत्र जीवात्मानः प्रतिशरीरं भिन्नाः बन्धमोक्षयोग्याः। परमात्मा ईश्वरः।

प्रत्यक्षाप्रत्यक्षद्रव्याणि–

अथ प्रत्यक्षाप्रत्यक्षद्रव्याणि—परमाणुद्व्यणुके अप्रत्यक्षे। मह-

---

मनांसि नित्यानि। सावयवा अपि त्रिविधाः शरीरेन्द्रियविषयभेदात्। तत्र शरीरं सुखदुःखादिसाक्षात्कारावच्छेदकम्। यदवच्छेदेन सुखदुःखादिकमात्मनि जायते तच्छरीरमित्याशयः। इन्द्रियञ्च शब्देतरोद्भूतविशेषगुणानाश्रयं ज्ञानकारणमनस्संयोगाश्रयश्च। उपभोगसाधनं विषयः। मानुषं शरीरं पार्थिवं क्लेदादीनामनुपलम्भेऽपि गन्धोपलम्भात्। जलीयं शरीरं वरुणलोके तैजसंशरीरमादित्यलोके वायवीयं शरीरं वायुलोके च प्रसिद्धम्।

मा० प्र० व्या०—गन्धग्राहकत्वे सतीन्द्रियत्वम् घ्राणेन्द्रियस्य लक्षणम्। घ्राणेन्द्रिये गन्धग्राहकत्वमिन्द्रियत्वञ्चास्तीति लक्षणसमन्वयः। गंधग्राहकत्वमात्रोक्तौ आत्मन्यतिव्याप्तिः तत्रापि गन्धग्राहकत्वस्य सत्त्वात् ज्ञानसामान्यं प्रत्यात्मनः समवायिकारणत्वात्। तद्वारणायेन्द्रियत्वमिति। केवलमिन्द्रियत्वमात्रोक्तौ अन्येन्द्रियेष्वतिव्याप्तिः। तद्वारणाय विशेषणदलम्। एवं रसग्राहकत्वे सतीन्द्रियत्वं रसनेन्द्रियस्य लक्षणम्।

एवं रूपग्राहकत्वे सतीन्द्रियत्वं चक्षुषो लक्षणम्। स्पर्शग्राहकत्वे सतीन्द्रियत्वं त्वचोः लक्षणम्। शब्दग्राहकत्वे सतीन्द्रियत्वं श्रोत्रस्य लक्षणमिति। अत्र दलव्यावृत्तयः पूर्ववद्बोद्धव्याः। मनस्तु सुखाद्युपलब्धिसाधनमिन्द्रियम्। सुखादिविषयकसाक्षात्कारनिष्ठजन्यतानिरूपितजनकताश्रयत्वे सतीन्द्रियत्वमिति तल्लक्षणम्। सर्वविषयञ्च मनः। इतराणीन्द्रियाणि नियतविषयाणि। ज्ञाननिष्ठाऽधेयतानिरूपिताधिकरणाश्रयत्वनात्मनो लक्षणम्। नित्यज्ञानाऽधिकरणत्वमीश्वरत्वमिति संक्षेपः।

मा० प्र० व्या०—परमाणु अप्रत्यक्षः महत्त्वाभावात्। उद्भूत-

दुद्भूतरूपवत्त्वं यत्र, तानि पृथिवीजलतेजांसि प्रत्यक्षाणि । आत्मा च प्रत्यक्षः । वाय्वाकाशकालदिङ्मनांसि तु अप्रत्यक्षाणि । बहिर्द्रव्यप्रत्यक्षं प्रति महत्त्वे सत्युद्भूतरूपवत्त्वं प्रयोजकम् ।

द्रव्योत्पत्तिप्रक्रियाप्रसङ्गेन कारणनिरूपणम्–

**अथ द्रव्योत्पत्तिप्रक्रिया—तत्रोत्पत्तिः कारणवतः, अनन्यथासिद्धनियतपूर्ववृत्तिकारणम् । तत्त्वं कारणत्वम् । त्रिविधानि कारणानि-समवायिकारणासमवायिकारणनिमित्तकारणानि । यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्, यथा परमाणुः द्व्यणुकस्य । कपालं घटस्य । समवायिकारणे सम्बद्धं कारणमसमवायिकारणम् । यथा**

---

रूपवत्त्वाभावात् च । द्व्यणुकं तु उद्भूतरूपभावादप्रत्यक्षम् । अत्र महत्त्वं अनेकद्रव्यत्त्वम् । अथवा द्व्यणुकेऽनेकद्रव्यवत्त्वंरूपं महत्त्वं वर्तते । वाय्वादिषु रूपस्यैवाभावादप्रत्यक्षत्वम् । यदि महत्त्वं महत्परिमाणवत्त्वम् तत् तदा द्व्यणुकेऽपि महत्त्वाभावादुद्भूतरूपाभावाच्चाप्रत्यक्षम् ।

**भा० प्र० व्या०**—कारणवतामेव द्व्यणुकादीनामुत्पत्तिः नत्वकारणवतां परमाणूनामुत्पत्तिः । अतएव वैशेषिकसूत्रं "सदकारणवन्नित्यमिति । तत्र कारणत्वञ्च कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वम् । अनन्यथा सिद्धत्वे सतीत्यपि पूरणीयम् । नियतत्वं चात्र व्यापकत्वम् । नियतत्वं कार्येप्यस्तीति तद्वारणाय पूर्ववृत्तित्वमिति । पूर्ववृत्तित्वस्य क्वचिद् रासभादावपि सत्वात् नियतत्वमिति । घटत्वावच्छिन्नं प्रति रासभस्य नियतपूर्ववृत्तित्वं नास्तीति तद्व्युदासः । एवञ्च नियतत्वे सति पूर्ववृत्तित्वस्य दण्डत्वदण्डरूपादौ सत्त्वात्तत्रातिव्याप्तिः । तद्वारणायानन्यथासिद्धत्वमिति निवेश इति संक्षेपः । तदिदं कारणं त्रिविधम्–समवाय्यसमवायिनिमित्तकारणभेदात् । तत्र समवायिकारणत्वञ्च समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्वम् । घटं प्रति कपालं समवायिकारणम् । घटः कपाले समवायेनोत्पद्यत इति घटे समवायसम्बन्धावच्छिन्ना कार्यता वर्तते । तन्निरुपिता या तादात्म्यसम्बन्धावच्छिन्ना कारणता कपाले कपालं तादात्म्ये नास्तीति प्रतीतिसिद्धा कारणता तदाश्रयत्वस्य तत्र सत्वाल्लक्षण-

परमाणुद्वयसंयोगो द्व्यणुकस्य, कपालरूपं घटरूपस्य। एतदुभय-भिन्नं यत् कारणं तन्निमित्तकारणम्। यथा द्व्यणुके ईश्वरः घटे दण्डः। एतत्कारणत्रयं भावकार्यमात्रस्य। तत्र समवायिकारणं द्रव्य-मेव। असमवायिकारणं द्रव्ये गुणः, गुणे गुणः कर्म च।

साधारणकारणनिरूपणम्—

कार्यमात्रं प्रति साधारकारणानि—ईश्वरः तत् ज्ञानेच्छाकृतयः प्रागभावकालदिगदृष्टानि। परमाणुद्वयसंयोगात् द्व्यणुकमुत्पद्यते। संयुक्तद्व्यणुकत्रयस्त्रसरेणुः एवं चतुरणुकादि कपालान्तं कपालद्वयसंयो-गेन घटो जायते। घटस्त्वन्त्यावयवी।

द्रव्ये प्रमाणनिरूपणम्—

अथ द्रव्ये प्रमाणं कथ्यते। प्रत्यक्षद्रव्ये प्रत्यक्षमेव प्रमाणम्,

---

समन्वयः। असमवायिकारणं तु द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या। तदुभयसाधारणलक्षणन्तु समवायसम्बन्धा-वच्छिन्नकार्यतानिरूपितसमवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धा-वच्छिन्नकारणताश्रयत्वमिति।

समवायिकारणभिन्नत्वे सत्यसमवायिकारणभिन्नत्वे सति कार-णत्वं निमित्तकारणत्वम्। ईश्वरेच्छयैव परमाणुषु क्रिया क्रियातो विभागः विभागात् पूर्वदेशसंयोगनाशः ततः परमाणुद्वयसंयोगः ततश्च द्व्यणुकोत्पत्तिरिति तत्रेश्वरः निमित्तकारणमित्याशयः। घटे दण्डः प्रसिद्ध एव।

**मा० प्र० व्या०**—कालेश्वरादृष्टादिकं कार्यमात्रं प्रति साधारण-कारणमिति सिद्धान्तः। एवमेवाऽऽकाशादिकमपि साधारणकारण-मिति बोद्धव्यम्। उत्पन्नस्य पुनरुत्पादभिया कार्यप्रागभावस्यापि कार्योत्पत्तिं प्रति साधारणकारणत्वाभ्युपगमः। परमाणुद्वयसंयोगात् द्व्यणुकस्य संयुक्तद्व्यणुकत्रयसंयोगात् त्र्यणुकस्योत्पत्तिरिति सम्प्र-दायः। साधारणकारणानां निरूपणादसाधारणकारणस्य स्मरणं यद्य-पि भवति अथ च तन्निरूपणं कर्तव्यं भवति तथापि तस्य निमितादि-कारणेषु यथायथमन्तर्भावादनिरूपणम्। ईश्वरस्तु सकलकार्यं प्रति निमित्तकारणम्। दण्डादिकन्तु तत्तत्कार्यं प्रति निमित्तकारणमिति सारः।

**मा० प्र० व्या०**—घटादिद्रव्यं प्रत्यक्षेणैव प्रमाणेन ज्ञायते। अतीन्द्रियपरमाण्वादि ज्ञानन्त्वाऽऽनुमानिकमेव। एवमीश्वरेऽप्यनु-

अतीन्द्रियेऽनुमानम्। तत्पक्षहेतुसाध्यदृष्टान्तज्ञानसाध्यम्। विशेषो वक्ष्यते। परमाणुद्व्यणुकानुमानं यथा, त्रसरेणुः सावयवद्रव्यारब्धः बहिरिन्द्रियवेद्यद्रव्यत्वात्। बहिरिन्द्रियवेद्यद्रव्यं यत् तत् सावयवद्रव्यारब्धं यथा घटः। अत्र त्रसरेणुः पक्षः सावयवद्रव्यारब्धत्वं साध्यं बहिरिन्द्रियवेद्यद्रव्यत्वादिति हेतुः। घटो दृष्टान्तः अनेन द्व्यणुकं परमाणुश्च सिद्धयति।

आकाशवायू शब्देन स्पर्शेन चानुमीयेते। शब्दः द्रव्याश्रितः गुणत्वात् यथा घटरूपम्। अनेन द्रव्यान्तरबाधात् शब्दाश्रयत्वेनाकाशं सिद्धयति।

पृथिव्यादित्रयाऽवृत्तिरयं स्पर्शः द्रव्याश्रितो गुणत्वादित्यनुमानेन द्रव्यान्तरबाधात् स्पर्शाश्रयत्वेन वायुः सिद्धयति। काले प्रमाणं यथा परत्वापरत्वे द्विविधे कालिके दैशिके च। परत्वोत्पत्तिश्च बहुतरविक्रियाविशिष्टशरीरज्ञानात् अपरत्वोत्पत्तिश्च स्वल्पतररविक्रियाविशिष्टशरीरज्ञानात्। तत् परत्वं ज्येष्ठत्वम्। अपरत्वं कनिष्ठत्वम्। तदनुमानं यथा—परत्वजनकं बहुतररविक्रियाविशिष्टशरीर-

---

मानप्रमाणगम्यत्वस्वीकारेऽनुपपत्तेरभावः यद्यप्यत्राऽऽगमादिकं प्रमाणं वर्तते तथापि अनुमानेनापि तत्सिद्धिस्सम्मतैव। अत्र त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन परमाणोः द्व्यणुकस्य च सिद्धिरपि द्रष्टव्या। मूलोक्तानुमाने सावयवद्रव्यत्वेन द्व्यणुकस्य अवयवत्वेन परमाणोश्च सिद्धिरेकदेवेति विशेषः।

**मा० प्र० व्या०**—शब्दः द्रव्याश्रितः गुणत्वात् रूपवदित्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दः न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत् शब्दः न दिक्कालमनसां गुणः विशेषगुणत्वात् रूपवत् नाऽऽत्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात् रूपवत् इत्येवमनुमानप्रकारैरितरबाधनिश्चये जाते शब्दाश्रयत्वेन आकाशस्य सिद्धिरित्याशयं प्रकाशयति—द्रव्यान्तरबाधादित्यादिना।

**मा० प्र० व्या०**—अयमुपलभ्यमानः विजातीयस्पर्शः द्रव्याश्रितः गुणत्वात् रूपवत्। नाऽयं जलतेजसोः तयोः शीतोष्णस्पर्शवत्वात्। नायं पृथिव्याः तद्गतस्पर्शस्य पाकजत्वात् नाप्याकाशादेः तत्र तदभावस्य निश्चयात्। तथाच तदाश्रितत्वेन वायोः सिद्धिरित्याशयेन

ज्ञानमिदं परम्परासम्बन्धघटकसापेक्षं साक्षात्सम्बन्धाऽभावे सति विशिष्टज्ञानत्वात्। लोहितः स्फटिक इति प्रत्ययवत्। परम्परासम्बन्धश्च स्वसमवायिसंयुक्तसंयोगः। तेन सम्बन्धघटकः कालः सिद्ध्यति। ननु कालस्य भूतभविष्यद्वर्तमानभेदेन बहुत्वात् कुत एकत्वमिति चेन्न। उपाधिभेदेन भेदप्रत्ययात् कालोपाधयो रविक्रियादिरूपा भिन्ना एव।

एवं दैशिकपरत्वाऽपरत्वाभ्यां दिशः सिद्धिः। ते च दूरत्वसमीपत्वे। अवधिसापेक्षबहुतरसंयोगविशिष्टशरीरज्ञानमिदं परत्वजनकं परम्परासम्बन्धघटकसापेक्षमित्यादिपूर्ववत्। तेन च दिशः सिद्धिः। नचाकाशमेव सम्बन्धघटकमास्तामितिवाच्यम्। तस्य शब्दाश्रयत्वेनैव धर्मिग्राहकप्रमाणसिद्धत्वात् न रविक्रियाद्युपनायकत्वसम्भवः।

---

लिखति-पृथिव्यादीत्यादिना। कालनिरूपणे परम्परासम्बन्धघटकत्वेन कालसाधनं कृतम्। अयं च सम्बन्धः स्वसमवायिसंयुक्तसंयोगरूप इति। स्वं रविक्रिया। तत्समवायी रविः तत्संयोगः काले तत्संयोगोऽस्मदादौ इति तद्घटकत्वेन कालस्य सिद्धिरिति। परत्वाऽपरत्वसमवायिकारणसंयोगाश्रयत्वे नापि कालसिद्धिरित्युपलक्षणम्।

मा० प्र० व्या०—कालस्त्वेकोप्युपाधिभेदात् क्षणादिव्यवहारविषयः। उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा।

दैशिकपरत्वाऽपरत्वयोरसमवायिकारणसंयोगाश्रयतया दिशः सिद्धिरित्युपलक्षणम्। अत्रावधिसापेक्षेति प्रयागात् काशीतो गया परा गयातः काशी अपरेति। अत्राद्ये अवधिः काशी तदपेक्षया प्रयागावधिकबहुतरसंयोगवत्त्वं गयायाम्। द्वितीयेऽवधिर्गया तदपेक्षया प्रयागावधिकाल्पतरसंयोगवत्त्वं काश्याम्। धर्मिग्राहकेति—धर्मिणः आकाशस्य ग्राहकं यत् प्रमाणं शब्दः क्वचिदाश्रितः गुणत्वाद्रूपवदित्यादिरूपं तद्वेद्यत्वात् न रविक्रियाद्युपनीतभानविषयत्वमित्याशयः। यदि रविक्रियाद्युपनीतभानविषयत्वं तदा हिमवत्यपि विन्ध्यवत्त्वप्रतीत्यापत्तिः। कालदिशोस्तु यत् सम्बन्धघटकत्वेन सिद्धिः तद्विशिष्टबुद्धिनियामकत्वेनेति नान्यस्य तत्र भानमितिभावः।

अहं सुखीत्यादिप्रत्यक्षमात्मनि प्रमाणम्। ईश्वरे चानुमानम्। यथा क्षितिः सकर्तृका कार्यत्वात् घटवत्। तेनेश्वरस्य तद्वृत्तिनित्यज्ञानेच्छाकृतीनां तत्सार्वज्ञ्यस्य च सिद्धिः। मनसि प्रमाणं यथा सुखादिप्रत्यक्षमिन्द्रियजन्यं जन्यप्रत्यक्षत्वात् घटप्रत्यक्षवत् तथा-चेन्द्रियान्तरबाधे मनसः सिद्धिः।

अथ द्रव्यनाशप्रक्रिया—द्रव्यनाशो द्विविधः, क्वचिदसमवायिकारणनाशात् क्वचित् समवायिकारणनाशाच्च। तत्राद्यो यथा परमाणुद्वयसंयोगनाशाद् द्व्यणुकनाशः। द्वितीयो यथा कपालनाशात् घटनाशः उभयतः सम्भवति। आकाशकालदिगात्मपरमाणवोऽवृत्तयः समवायश्च। पृथिव्यादिपञ्चानां भूतत्वं, पृथिवीजलतेजो वायु-

---

मा० प्र० व्या०—आत्मा तु मन इन्द्रियजन्यप्रत्यक्षविषयः। ईश्वरस्तु क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वादिघटवदित्यनुमानेन सिद्ध्यति। उक्तञ्चेदं महादेवभट्टैः सकर्तृकत्वानुमानेनैव ज्ञानेच्छाकृतीनां त्रयाणामपीश्वरे सिद्धिरिति सार्वज्ञ्यमपि सकलकार्यनिमित्तत्वादिति सुष्ठु तेनेश्वरस्येत्यादि।

अनिन्द्रियनिमित्ताः स्मृत्यादयः इन्द्रियान्तरनिमित्ता भवितुमर्हन्तीति। तच्चेन्द्रियान्तरं बहिरिन्द्रियातिरिक्तं मनः। युगपच्च खलु घ्राणादीनां गन्धादीनाञ्च सन्निकर्षेषु सत्सु युगपत् ज्ञानानि नोत्पद्यन्ते तेनानुमीयतेऽस्ति तत्तदिन्द्रियसंयोगिसहकारिनिमित्तान्तरमव्यापि यस्यासन्निधेर्नोत्पद्यते ज्ञानं सन्निधेश्चोत्पद्यत इति। मनस्संयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपद्युत्पद्येरन् ज्ञानानीत्येनमाशयं प्रकटयदेव सूत्रं भगवता व्यरचि गौतमेन युगपत् ज्ञानाऽनुत्पत्तिर्मनसो लिङ्गमिति। चक्षुरादीनीन्द्रियाणि सुखादिकारणरूपादिप्रत्यक्षमेव जनयन्ति। अहं सुखीत्यादि सुखप्रत्यक्षन्तु मन एव जनयतीत्येवं रूपेणेन्द्रियान्तरबाधोऽत्रसेय इत्याशयः।

मा० प्र० व्या० – समवायिकारणनाशादसमवायिकारणनाशाच्च द्रव्यनाशो भवति। तत्रोदाहरणं कपालनाशात् घटनाशः कपालद्वयसंयोगनाशाच्च घटनाश इति। सर्वत्राऽसमवायिकारणनाशादेव द्रव्यनाश इति नवीना इति नीलकण्ठीये। सर्वव्याप्तानां किञ्चिदधिकरणमप्रसिद्धमित्याकाशकालदिगाऽत्मपरमाणूनामवृत्तित्वमभिहितम्। समवायस्य तु स्वमतेन अवृत्तित्वम्।

मनसां क्रियावत्त्वमूर्तत्वे। पृथिव्यप्तेजोवायवः द्रव्यसमवायिकारणानि कालस्य कालिकसम्बन्धेन सर्वाधिकरणत्वम्। दिशो दैशिकसम्बन्धेन सर्वाधिकरणत्वम्। इति द्रव्यनिरूपणम्॥

अथगुणनिरूपणम्—

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाश्चतुर्विंशतिर्गुणाः अत्र रूपत्वादीनि सर्वाण्येव जातयः। रूपं पृथवीजलतेजोवृत्ति। तच्च शुक्लकृष्णरक्तपीतचित्रादिभेदेन बहुविधं पृथिवीवृत्ति। अभास्वरशुक्लरूपं जलवृत्ति। शुक्लभास्वरं तेजोवृत्ति। रसः पृथिवीजलवृत्तिः तत्र मधुरलवणकटुतिक्ताम्लकषायभेदात् षड्विधः रसः पृथिव्याम्। जले मधुर एव रसः। गन्धो द्विविधः। सुरभिरसुरभिश्च पृथिवीमात्रवृत्तिः। स्पर्शः पृथिव्यादिचतुष्टयवृत्तिः। स च त्रिविधः शीतः उष्णश्च अनुष्णाशीतः। अनुष्णाशीतस्पर्शः वायुपृथिव्योः। जले शीतः तेजसि उष्णः।

संख्यापरिमाणपृथक्त्वसंयोगविभागाः नवद्रव्यवृत्तयः। परा-

---

पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम्। भूतत्वञ्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। बहिरिन्द्रियग्राह्या विशेषगुणाः रूपादयः तद्वत्त्वं पृथिव्यादिष्वस्तीति तेषां भूतत्वम्। मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वमित्याशयेन पृथिव्यप्तेजोवायुमनसां क्रियावत्त्वमूर्तत्वे इत्युक्तम्।

कालस्तु कालिकसम्बन्धेन सर्वाधिकरणं भवति। दिक् दैशिकसम्बन्धेन।

इतिद्रव्यनिरूपणम्॥

मा० प्र० व्या०—चतुर्विंशतिः गुणा नैयायिकैरुक्ताः। तेषु रूपं सप्तविधं शुक्लनीलादिभेदेन विद्यमानं पृथिव्यां तिष्ठति। जलेऽभास्वरशुक्लं तेजसि भास्वरशुक्लरूपम् च। रूपञ्च चक्षुर्मात्रग्राह्यो गुणः। रसश्च रसनाग्राह्यो गुणः। गन्धश्च घ्राणग्राह्यो गुणः स्पर्शश्च त्वङ्मात्रग्राह्यो गुण इति तद्विवेकः। पृथिव्यां रूपरसगन्धस्पर्शाः पाकजाः। जलादिषु कारणगुणपूर्वकाः अतः पृथिवीपरमाणावपि रूपरसगन्धस्पर्शा अनित्या एव। जलादौ तु नित्याः अनित्य द्वयणुकादावनित्या इति विवेकः।

मा० प्र० व्या०—एकं रूपं रसात् पृथगिति व्यवहारेण यद्यपि

परत्वे पृथिवीजलतेजोवायुमनो वृत्तिनी। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नभावना धर्माधर्मा आत्मवृत्तयः। गुरुत्वं पृथिवीजलवृत्तिः द्रवत्वं पृथिवीजलतेजोवृत्तिः। तद्विविधं नैमित्तिकं सांसिद्धिकञ्च। आद्यं पृथिवीतेजसोः। द्वितीयं जले। स्नेहोजलमात्रवृत्तिः। संस्कारः पृथिवीजलतजोवारवात्ममनोमात्रवृत्तिः। सत्रिविधः वेगोभावना स्थिस्थापकश्च। तत्र वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः। द्वितीयः आत्मवृत्तिः। तृतीयः पृथिव्यादिचतुष्टयवृत्तिः। शब्दो द्विविधः ध्वन्यात्मको वर्णात्मकश्च आकाशमात्रवृत्तिः।

रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाविशेषगुणाः। संख्यापरिमाणपृथक्त्वसंयोगविभागगुरुत्वनैमितिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः।

अथ नित्यगुणाः जलतेजोवायुपरमाणूनां विशेषगुणाः परमाणुवृत्तिस्थितिस्थापकश्च विभूनां परमाणूनाञ्च एकत्वपरिमाणपृथक्त्वानि ईश्वरेच्छाज्ञानकृतयश्च नित्यगुणाः। अथाऽप्रत्यक्षगुणाः गुरुत्वधर्माऽधर्मभावनास्थितिस्थापकाः परमाणुद्व्यणुकवृत्तिगुणाः अती-

---

एकत्वसंख्या रूपादावस्तीति प्रतीयते तथापि गुणे गुणानङ्गीकारात् एकार्थसमवायेनैव तादृशप्रतीत्युपपत्तिः। गुणाश्च द्रव्यसंस्थानाः। सर्वेऽपि गुणा द्रव्यवृत्तय एव। परमिमे गुणास्तु सर्वद्रव्यवृत्तय इत्याशयः विशेषगुणास्तु—

रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिकोद्रवः।
बुद्धादिभावनान्ताश्च शब्दो वैशेषिकागुणाः॥

भावना तु अनुभवजन्या स्मृति हेतुः। वेगोऽपि संस्कारविशेष एव। स्थितिस्थापकस्तु अन्ययाकृतस्य पुनस्तादवस्थ्यापादकः पृथिव्यादि चतुष्टयवृत्तिः।

**भा० प्र० व्या०**—जलतेजोवायुपरमाणुवृत्तयः विशेषगुणाः आकाशकालदिगात्यमनोवृत्तिमाकत्वपरिमाणपृथक्त्वानि ईश्वरवृत्तय ज्ञानेच्छाकृतयः नित्याः गुणाः। गुरुत्वादीनामप्रत्यक्षगुणत्वम्। तसरेणोरूपस्य तु प्रत्यक्षगुणत्वमेव। रसादीनान्त्वप्रत्यक्षत्वमनुद्भूतत्वात्। तत्र रूपांशे उद्भूतत्वं रसाद्यंशेऽनुद्भूतत्वमिति कथनाऽपेक्षया रसादीना इन्द्रियसंस्पर्शनेन विलयात्। वस्तुतः रसादीनामपि

न्द्रियवृत्तिसामान्यगुणाः त्रसरेणोः रूपं विहाय अन्ये गुणा अतीन्द्रियाः ।

रूपरसगन्धस्पर्शस्नेहप्रत्यक्षे महद्वृत्तित्वे सति उद्भूतत्वं प्रयोजकम् । सामान्यगुणप्रत्यक्षेतु आश्रयप्रत्यक्षम् । बुद्धिप्रत्यक्षे वृत्तिविशिष्टज्ञानत्वम् । सुखादिप्रत्यक्षे स्ववृत्तिसुखत्वादिकमेव । अन्त्याऽऽद्यशब्दौ विहाय सर्वः शब्दः प्रत्यक्षः ।

अथगुणोत्पत्तिप्रक्रिया—अवयववृत्तिविशेषगुणाः अवयविनि स्वसमानजातीयगुणानारभन्ते पृथिवीविशेषगुणाः पाकजाः ते द्विविधाः पाकप्रयोज्याः पाकजन्याश्च । कारणगुणप्रक्रमजन्याः पाकप्रयोज्याः अग्निसंयोगजन्याः द्वितीयाः । श्यामघटेऽग्निसंयोगेन श्यामरूपनाशानन्तरं घटे रक्तं रूपमुत्पद्यत इति नैयायिकमतम् ।

अग्निसंयोगेन परमाणौ पाके सति परमाणुषु रक्तरूपमुत्पद्यते । पुनर्घटोत्पत्तौ सत्यां कारणगुणप्रक्रमेण घटे रक्तरूपमुत्पद्यत इति

---

प्रत्यसत्वाङ्गीकारे क्षतिविरहादिति विभावनीयम् । अथवा उद्भूतत्वस्य सत्वेऽपि महद्वृत्तित्वाऽभावादप्रत्यक्षत्वमिति वा वक्तव्यम् ।

भा० प्र० व्या०—संख्यादिसामान्यगुणप्रत्यक्षे संख्याश्रितद्रव्यप्रत्यक्षमेव कारणम् । बुद्धिप्रत्यक्षेऽहं जानामीत्यनुभवसाक्षिवृत्तिविशिष्टज्ञानत्वं कारणम् । सुखप्रत्यक्षेऽहं सुखीत्यनुभवविषयस्ववृत्तिसुखत्वमेव । आद्यशब्दस्य शब्दान्तरोत्पादेन विनाशात् कर्णदेशपर्यन्तमनागमनादप्रत्यक्षत्वम् । अन्त्यशब्दस्य तु उपान्त्यशब्देननाश इत्यङ्गीकारादप्रत्यक्षत्वम् ।

पृथिव्यप्तेजो वायुपरमाणुवृत्तिविशेषगुणाः अवयविनि द्व्यणुकादौ स्वसमानजातीयगुणानारभन्ते । पृथिवीविशेषगुणाः पाकजाः पाकस्य पृथिव्यामेवाङ्गीकारात् । ते पाकजाः पुनर्द्विविधाः पाकप्रयोज्याः पाकजन्याश्चेति । प्राकप्रयोज्याः कारणगुणाः कार्ये द्व्यणुकादौ जायमानाः । पाकजन्याः अग्निसंभोगरूपपाकेन जायमानाः । एते परमाणावपि भवन्ति । नैयायिकानां मतेऽवयविन्यपि रूपनाशरूपान्तरोत्पत्ती भवतः ।

भा० प्र० व्या०—अत एव नैयायिकानान्तु मते द्व्यणुकादावपीष्यते इति मुक्तावलीकारिका । वैशेषिकाणां मते तु अग्निसंयोगेन परमाणुपर्यन्तं भग्ने घटे विलक्षणतेजस्संयोगान्तरेण पूर्वरूपनाशः

वैशेषिकमतम्। कपालं नीलमेकं दाकं च पीतं यदि तदा घटे चित्ररूपमुत्पद्यते। रसादावेवं सति अवयविनि रसो न जायते। चित्ररसाद्यस्वीकारात्। गुरुत्वस्थितिस्थापकयोश्च कारणगुणप्रक्रमजन्यता। द्वित्वादयोऽपेक्षा बुद्धिजन्याः।

परिमाणं चतुर्विधम्। अणु, महत्, ह्रस्वं दीर्घं चेति। कारणगुणप्रक्रमजन्यं स्वावयवबहुत्वं महत्त्वजनकम्। यथा त्रसरेणूनाम् अवयवानां शिथिलः संयोगः प्रचयोऽपि तज्जनकः यथा तूलस्य परिमाणम्। पृथक्त्वं कारणगुणप्रक्रमजन्यम्। ननु तत्र किं प्रमाणम्। घटात् पटः पृथगिति प्रत्यक्षम्। तस्याऽन्योन्याभावविषयकत्वमिति चेन्न। अन्योन्याभावप्रत्यये प्रतियोग्यनुयोगिनोः समानविषयकत्वमिति नियमात्। यथा घटो न पट इत्यन्योन्याभावस्य पृथक्त्वरूपत्वे घटात् पटो नेत्यपि प्रयोगापत्तेः। न चैवं घटादन्यः पट इत्यत्र कथमन्योन्याभावप्रतीतिरिति वाच्यम्। अन्यत्वस्यापि पृथक्त्व रूपत्वात्।

---

रूपान्तरोत्पत्तिश्च जायते। ततश्च परमाणुद्वयसंयोगेन द्व्यणुकादिक्रमेण घटस्योत्पत्तिः तत्र रूपाद्युत्पत्तिश्च जायते। तेजसोऽतिशयवेगवशेन पूर्वव्यूहनाशव्यूहान्तरोत्पत्ती भवत इति। नैयायिकानां मते तत्र प्रमाणस्याऽभावात् सोऽयं घट इति प्रत्यभिज्ञाबलाच्च अवयविनाऽवष्टब्धेष्ववयवेष्वपि पाको भवतीत्याशयः सम्मतः। अवयवेषु भिन्नं-भिन्नं रूपं भवति यदवयविनि रूपं चित्रमुत्पद्यते। रसविषये तु तथानाङ्गीक्रियत इति सम्प्रदायः।

मा० प्र० व्या०—परिमाणं मानव्यवहाराऽसाधारणकारणम्। तच्चतुर्विधम्। कारणगुणप्रक्रमजन्यं स्वावयवबहुत्वं महत्त्वमुत्पादयति। उद्भूतत्वं महत्त्ववति सर्वत्र भवितव्यमितिनास्ति। अत एव महत्त्वे सत्युद्भूतत्वं प्रत्यक्षत्वप्रयोजकमित्युक्तम्। उद्भूतत्वं रूपादौ तिष्ठति। तदपि त्र्यणुकादौ।

अन्योन्याभावप्रतीतितः पृथक्त्वप्रतीतिर्भिन्नैव। घटादन्यः पट इत्यत्राप्यन्योन्याभावरूपत्वं न स्वीक्रियते। किन्तु पृथक्त्वमेव। अत्र भास्करोदयाकारास्तु पृथक्त्वं न गुणः घटात् पटः पृथगिति व्यवहारः अन्योन्याभावनिबन्धन एव। पञ्चम्याः प्रतियोगित्वाऽर्थकतया घटप्रतियोगिकभेदवान् पट इत्यर्थबोधात्।

संयोगः त्रिविधः। अन्यतरकर्मजः उभयकर्मजः संयोगजश्च। आद्यो यथा मनः कर्मणा आत्ममनसोः संयोगः। द्वितीयो यथा मेषयोः कर्मणा तयोः संयोगः। तृतीयो यथा कारणाकारणसंयोगात् कार्य्याकार्यसंयोगः। यथा हस्ततरुसंयोगात् कायतरुसंयोगः।

विभागोऽपि त्रिविधः। अन्यतरकर्मज, उभयकर्मजः विभागजश्च। आद्यो यथा मनः कर्मणा। आत्ममनसोर्विभागः द्वितीयो यथा मेषयोः कर्मणा तयोर्विभागः। विभागजविभागो द्विविधः। कारणमात्रविभागजः कारणाकारणविभागजश्च। आद्यो यथा कपालकर्मणा कपालद्वयविभागः ततः कपालद्वयसंयोगनाशः ततो घटनाशः ततः कपालस्य आकाशादिदेशाद्विभागजो विभागः। न च विभागः स्वोत्पत्त्यनन्तरमेव विभागजविभागं जनयतीति वाच्यम्। द्रव्यनाशसहकृतस्यैव तस्य तज्जनकत्वात्। तत्र द्रव्यस्य प्रतिबन्धकत्वेन सति द्रव्ये।

तदसम्भवात्। न च कर्मैवैकदा कपालद्वयविभागमाकाशकपालविभागं च जनयत्विति वाच्यम्। यद् द्रव्याऽनारम्भकसंयोगविरोधिनं विभागमारभते न तत् द्रव्यारम्भकसंयोगविरोधिनं अन्यथा विकसत्कमलदलकुडमलदलकर्मण्यतिव्याप्तिः। न च संयोगेऽप्येवमस्तु तत्र अविरोधात्। द्वितीयस्तु कारणाकारणविभागात् कार्य्याकार्य्यविभागः। यथा करतरुविभागात् कायतरुविभागः। परत्वाऽपरत्वोक्तिः कालप्रकरणे उक्ता।

बुद्धिर्ज्ञानं तद्द्विविधम् स्मरणमनुभवश्च। स्मरणमपि द्विविधम्

---

मा० प्र० व्या०—संयुक्तव्यवहारहेतुः संयोगः त्रिविधः। विभागोऽपि त्रिविधः। तत्र तृतीयः कारणमात्रविभागजः कारणाकारणविभागजश्चेति द्विविधः। अत्र विभागजविभागः विभागोत्पायनन्तरमेव जायेत उत द्रव्यनाशसहकृतस्यैव तस्य तज्जनकत्वमिति विकल्प्य द्रव्यनाशसहकृतस्यैव तस्य तज्जनकत्वमिति स्थिरीकरोति। तत्र द्रव्यस्येत्यादिना न च कर्मैव एकदा कपालद्वयविभागं आकाशकपालविभागं च जनयेदिति वाच्यम्। यत् द्रव्यानारम्भकसंयोगविरोधिमं विभागमारभते न तत् द्रव्यारम्भकसंयोगविरोधिनं विभागमारभते। अन्यथा विकसत्कमलकुडमलभङ्गप्रसङ्गात्।

मा० प्र० व्या०—बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमिति सूत्रम्।

यथार्थमयथार्थं च। तद्वति तत्प्रकारकत्वं यथार्थत्वं तदभाववति तत्प्रकारकत्वमयथार्थत्वम्।

पूर्वानुभवः संस्कारद्वारा स्मरणं जनयति। तत्र पूर्वानुभवस्य यथार्थत्वाऽयथार्थत्वाभ्यां स्मरणमप्युभयरूपं भवति। अनुभव द्विविधः प्रमाऽयथार्थश्च। तत्र प्रमाचतुर्विधा सा वक्ष्यते।

अयथार्थज्ञानं चतुर्विधम्। संशयो, विपर्य्ययः स्वप्नोऽनध्यवसायश्चेति। संशयो यथा समानधर्मवद्धर्मिज्ञानविशेषाऽदर्शनकोटिद्वयस्मरणैः अयं स्थाणुर्वा पुरुषो वेति ज्ञानं जन्यते। स एव संशयः। विपर्ययस्तु समानधर्मवद्धर्मिज्ञानं विशेषादर्शनैककोटिस्मरणैः शुक्ताविदं रजतमिति ज्ञानं जन्यते। तत्र गुरुमते इदमित्यनुभवात्मकं ज्ञानं रजतमिति स्मरणात्मकं तेन ग्रहणस्मरणात्मकं ज्ञानद्वयम् न तु रजतत्वविशिष्टज्ञानमिदम्। अन्यस्यान्यथाभानसामग्र्यभावात्। प्रवृत्तिश्च स्वतन्त्रोपस्थितेष्टभेदाऽग्रहात्।

---

तच्च ज्ञानं स्मृतिरूपमनुभवरूपश्च। यद्यपि स्मरणाऽनुभवयोरुभयोरप्ययथार्थयथार्थभेदेन विभजनमुचितं तथापि अनुभवजन्यत्वात् स्मृतेरेकस्य तथाविधत्वे कथितेऽपरस्यापि तादृग् भेदवत्वं निरूपितप्रायमित्याशयेन। तत्र तद्वति तत्प्रकारकत्वं यथार्थमिति। अथवाऽग्रेऽनुभवस्यापि भेदं प्रपञ्चयतीति नेदं विचारणीयम्।

मा० प्र० व्या०—स्मरणे संस्कारद्वारा पूर्वानुभव एव कारणम्। अनुभवः यथार्थोऽयथार्थ इति द्विविधः। तदनुसारेण स्मरणमपि द्विविधम्। प्रत्यक्षानुमित्युभयमिति शाब्दभेदाद्यथार्थानुभवोऽपि चतुर्विधः। यथार्थानुभव एव प्रमा। अयथार्थानुभवोऽपि संशयविपर्ययस्वप्नाऽनध्यवसायभेदेन चतुर्विधः। समानधर्मद्धर्मिज्ञानविशेषाऽदर्शनप्रयुक्तकोटिद्वयस्मरणैरयं स्थाणुर्वा पुरुषोवेति ज्ञानमुदेति। तदेव संशयः। एकधर्मिकविरुद्धनानाधर्मप्रकारकज्ञानमित्यन्नम्भट्टाः। विपर्ययो भ्रमः। अत्रापि एककोटिस्मरणे समानधर्मवद्धर्मिज्ञानविशेषाऽदर्शनयोः प्रयोजकत्वम्। संशये धर्म्यन्तरस्यापि स्मरणं विपर्यये तु एकस्यैव धर्मिणः स्मरणमिति विवेकः। गुरुमते तु ज्ञानद्वयरूपमिति न विपर्ययः स्वीक्रियते। तर्हि प्रवृत्तिस्तु इष्टभेदाऽग्रहाद्भवति।

नैयायिकमते प्रवर्तकं विशिष्टज्ञानं तेन भ्रमः सिद्ध्यति। स्वप्नस्तु अनुभूतपदार्थस्मरणैः अदृष्टेन धातुदोषेण च जन्यते। अनध्यवसायश्च किञ्चिदितिज्ञानं विशेषादर्शनाद् भवति। अत्रयदि अयं निर्वह्निः स्यात् तदा निर्धूमः स्यादिति तर्को विपर्ययमध्ये बोध्यः। तत्र नैयायिकमते स्वप्नाऽनध्यवसायौ विपर्ययमध्ये प्रविष्टौ। तेन तन्मतेऽयथार्थज्ञानं द्विविधम्। संशयो विपर्ययश्चेति। सुखं धर्मजन्यम्। इच्छा इष्टसाधनता ज्ञानजन्या। द्वेषोऽनिष्टसाधनत्वज्ञानजन्यः। कृतिस्त्रिविधा। जीवनयोनियत्नरूपा प्रवृत्तिः निवृत्तिश्च। आद्या जीवनादृष्टजन्या द्वितीया इच्छा जन्या तृतीया द्वेषजन्या। धर्मः श्रुतिविहितकर्मजन्यः। अधर्मः श्रुतिविरुद्धाचरणजन्यः।

वेगाख्यः संस्कारः आद्यक्रियाजन्यः द्वितीयादिक्रियाजनकः। यथा वेगेन बाणश्चलतीति। भावनाख्यः संस्कारः विशिष्टज्ञानजन्यः। स्थितिस्थापकाख्यः संस्कारः कारणगुणप्रक्रमजन्यः। गुरुत्वं कारणगुणप्रक्रमजन्यम्। नैमित्तिकं द्रवत्वं जतुघृतद्रुतसुवर्णादीनामग्नि-

---

मा० प्र० व्या० — रजतत्वविशिष्टज्ञानमेव रजतार्थिप्रवृत्तिजनकमिति भ्रम उपपद्यते नैयायिकमते। स्वप्नस्तु विपर्ययेऽन्तर्भवतीति तस्य पुनर्गणनं न कृतं नैयायिकैः। अनध्यवसायश्च अनिश्चयज्ञानं निर्विकल्पकं वा तर्कोऽपि विपर्यमध्य एवाऽन्तर्भावनीय इति जगदीशानामाशयः। अन्नम्भट्टास्तु अतिरिक्ततयैवोरीचक्रुः।

सर्वेषामनुकूलतया वेदनीयं सुखम्। प्रतिकूलतया वेदनीयं दुःखम्। अन्येच्छाऽनधीनेच्छाविषयत्वं सुखत्वम्। अन्यद्वेषाऽनधीनद्वेषविषयत्वं दुःखत्वमिति न्यायबोधिनीकाराः। यागादौ स्वर्गादीच्छाऽधीनेच्छाविषयत्वमस्ति सुखादौ अन्येच्छाधीनेच्छाविषयत्वं नास्तीति अन्येच्छाऽनधीनेच्छाविषयत्वमस्तीति लक्षणसमन्वयः। एतदपेक्षया धर्मजन्यत्वमित्युक्ते लाघवमिति तत्कथनम्। धर्मजन्यत्वं नाम वेदविहितधर्मजन्यत्वम्। दुःखत्वञ्च वेदनिषिद्धाधर्मकर्मानुष्ठानजन्यत्वमित्याशयः।

मा० प्र० व्या० — अनुभवजन्या स्मृतिहेतुर्भावना इति तर्कसंग्रहकाराः। तथाच विशिष्टज्ञानमनुभवात्मकं ग्राह्यम्। अन्यथाकृतस्य पुनस्तादवस्थ्यापादको गुणः स्थितिस्थापकः। गुरुत्वमाद्यपतनाऽसम-

संयोगजन्यम् । स्नेहः कारणगुणप्रक्रमजन्यः । शब्दस्त्रिविधः। संयोगजः विभागजः शब्दजश्च । आद्योभेरीदण्डसंयोगजन्यः द्वितीयः वंशादिदलद्वयविभागजन्यः तृतीयस्तु संयोगेन विभागेन च आद्ये शब्दे जनिते तेन शब्देन निमित्तवायुसहकृतेन वीचीतरङ्गन्यायेन कदम्ब-गोलकन्यायेन वा जन्यत इति गुणनिरूपणम् ।

कर्मनिरूपणम् --

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चकर्माणि । उत्क्षेपण-त्वानि जातयः। पृथिवीजलतेजोवायुमनोवृत्तीनि कर्माणि । सर्वाणि अनित्यानि । अतीन्द्रिये वृत्तीन्यतीन्द्रियाणि । प्रत्यक्षवृत्तीनि प्रत्यक्षाणि । अथ कर्मप्रक्रिया संयोगेन नोदनाख्येनाद्यं कर्मजन्यते। द्वितीयादि वेगजन्यम् । क्रिया क्रियातोविभागः विभागात् पूर्वसंयोग-नाशः ततः उत्तरदेशसंयोगोत्पत्तिः ततः कर्मविभागयोर्नाशः । इति कर्मनिरूपणम् ।

---

वायिकारणम् । पतने आद्यत्वञ्च स्वसमानाधिकरणपतनप्रतियोगिक-ध्वंसाऽसमानकालीनत्वम् । द्रवत्वमाद्यस्यन्दनाऽसमवायिकारणम् । नैमितिकं द्रवत्वं घृतसुवर्णादीनाम् । सांसिद्धिकं तु जलादीनाम् । चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे-सति गुणत्वं शब्दस्य लक्षणम् । श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वं शब्द-त्वशब्दाऽभावयोरपि भवतीति तत्राऽतिव्याप्तिवारणाय गुणत्वस्य-निवेशः। तन्मात्रोक्तौ शब्देतरगुणेष्वतिव्यप्तिर्भवतीति तद्वारणाय विशेषणदलम् ।

मा० प्र० व्या०—कर्मत्वजातिः प्रत्यक्षसिद्धा । संयोगाऽसमवायि-कारणत्वे सति संयोगभिन्नत्वं कर्मणो लक्षणम् । संयोगाऽसमवायि-कारणत्वं संयोगजनकसंयोगेऽप्यस्तीति संयोगभिन्नत्वमितिनिवेशः। तन्मात्रोक्तौ विभागादावतिव्याप्तिः तद्वारणाय संयोगाऽसमवायि-कारणत्वमिति । विभागस्यतु संयोगनाशकत्वमेवेति न तत्राऽति-व्याप्तिः । कर्म पृथिव्यप्तेजोवायुमनस्स्वेव तिष्ठति । प्रत्यक्षतोऽ-नुभवात् । आकाशकालदिगात्मनान्तु सर्वव्याप्तत्वात् न कर्मप्रसक्तिः । एतेन विभुपदार्थे कर्मणोऽभावः मूर्तपदार्थे कर्मणो वृत्तित्वमिति ज्ञातम् । कर्माणि सर्वाण्यपि अनित्यान्येव । अतीन्द्रियपरमाणवादा-वपि कर्म ण्यनित्यानि किन्त्वतीन्द्रियाणीत्याशयः ।

सामान्यनिरूपणम्—

सामान्यं द्विविधम् व्यापकं व्याप्यं व्याप्यव्यापकञ्च व्यापकं सत्ता व्याप्यं घटत्वादि व्याप्यव्यापकं द्रव्यत्वादि। व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः रूपहानिरसम्बन्धो जाति बाधकसंग्रहः। नित्यत्वेसत्यनेकसमवेतत्वं सामान्यलक्षणम्। सामान्यानि नित्यान्येव। अतोन्द्रियवृत्तीन्यतीन्द्रियाणि प्रत्यक्षवृत्तीनि प्रत्यक्षाणि।

---

**मा० प्र० व्या०**—नित्यत्वे सत्यनेकसमवेतत्वमिति सामान्यस्य लक्षणम्। घटत्वादिजातिषु नित्यत्वं वर्तते एवमनेकेषु घटेषु समवायसम्बन्धेन वृत्तित्वमप्यस्तीति लक्षणसमन्वयः। नित्यत्वमात्रोक्तौ गगनेऽतिव्याप्तिः अतोऽनेकसमवेतत्वमिति। अनेकसमवेतत्वमात्रोक्तौ संयोगेऽतो नित्यत्वमिति। समवेतत्वं विहाय अनेकवृत्तित्वमित्युक्तेऽत्यन्ताभावे अतिव्याप्तिः। अतः समवेतत्वमिति। तस्य समवायसम्बधेनाऽवृत्तित्वान्न दोषः। नित्यत्वे सति समवेतत्वमित्युक्ते गगनपरिमाणादावतिव्याप्तिः अतोऽनेकेति। गगनपरिमाणस्य गगनमात्रसमवेतत्वान्नदोषः। व्याप्यम् अपरम्, व्यापकं परम् व्याप्यव्यापकं परापरम् व्यक्तेरभेदः—स्वाश्रयव्यक्तिनिष्ठप्रतियोगिताकभेदाऽभावः स्वस्यजातित्वे बाधकः। स्वं आकाशत्वं स्वाश्रयव्यक्तिराकाशः तन्निष्ठप्रतियोगिताको भेदो नास्तीतिभेदाभावो वर्तत इति तस्य न जातित्वम्।

**तुल्यत्वम्**—स्वभिन्नजातिसमनियतत्वम्। तत्समनियतत्वञ्च तद्व्याप्यत्वे सति तद्व्यापकत्वम्। स्वं घटत्वम् तद्भिन्नाजातिः कलशत्वम् तत्समनियतत्वं घटत्वे। तत्र घटत्वस्य जातित्वे कलशत्वस्य जातित्वं न भवति। यदि कलशत्वस्य जातित्वं तदा घटत्वस्य जातित्वं न भवतीत्याशयः।

**सङ्करः**—परस्परात्यन्ताभावसमानाधिकरणयोधर्मयोरेकत्र समावेशः। भूतत्वमूर्तत्वयोर्जातित्वे बाधकः। इमे त्रयोऽपि जातित्वे बाधकाः।

**अनवस्थितिर्नामा**ऽप्रामाणिकानन्तपदार्थकस्यनाविश्रान्तेरभावः। जातेर्जातिमत्त्वे इयं बाधिका। यद्यपि निखिलजातिष्वेकवैजा-

नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः ते च बहवो नित्या अतीन्द्रियाश्च। प्रलये परमाणूनां भेदाय ते स्वीक्रियन्ते। तेषां वैधर्म्यव्याप्यत्वादिति।

स्वसम्बन्धिभिन्नः नित्यः सम्बन्धः समवायः तेन स्वरूप-

---

त्याङ्गीकारेऽपि तद्वैजात्येन न वैजात्यान्तरम्। तथापि निखिलजातिष्वेकवैजात्यं तद्वैजात्यं तदाश्रयजातिषु पुनर्वैजात्यमित्येवमग्रे पीत्यनवस्था।

रूपहानिः। लक्षणभङ्गः। तत्र विशेषाणां निःसामान्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं लक्षणम्। यदि तत्र जातिः स्वीक्रियते तदा निःसामान्यत्वघटितलक्षणस्य भङ्गो बोध्यः।

असम्बन्धः प्रतियोगिताऽनुयोगिताऽन्यतरसम्बन्धावच्छिन्नसमवायाभावः। नऽऽभावे कोऽपि समवायेन वर्तते नाप्यभावः क्वचित्समवायेन वर्तत इति न तस्य जातिमत्त्वमित्याशयः।

मा० प्र० व्या०—अन्तेऽवासाने भवन्तीत्यन्त्याः। यदपेक्षयाविशेषा न सन्तीत्यर्थः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात् परस्परं भेदः। परमाणूनां परस्परं भेदसाधको विशेष एव। एवञ्च मूलानुसारेण अन्त्यत्वे सति नित्यद्रव्यवृत्तित्वं विशेषाणां लक्षणमिति मन्तुं शक्यते। अथवा स्वतो व्यावृत्तत्वमेव विशेषाणां लक्षणम्। स्वतो व्यावृत्तत्वञ्च स्वभिन्नलिङ्गकस्वविशेष्यकस्वसजातीयेतरभेदानुमित्यविषयत्वम्। अथ विशेषपदार्थे किं प्रमाणम्। न च अत्यन्तं संकीर्णानां परमाणूनां भेदकधर्मं विना भेदकसिद्धिरतो विशेषोऽङ्गीकर्तव्य इति वाच्यम्। एकत्वादिव्यक्तेरेव भेदकत्वसम्भवादिति चेत् न यतः एतत् परमाणौ तत्परमाणुभेदसाधने एकत्वादे र्व्यभिचारितया एतदेकत्वादेरेव हेतुता वाच्या। न च तयोः परमाण्वो र्भेदाऽसिद्धौ एकत्वादावेतत्त्वं सुग्रहम्। एतत् परमाणुसमवेतत्वं हि तस्यैतत्त्वम्। तस्मात् प्रतिनित्यद्रव्यमेष्टव्यः विशेषपदार्थः। स एव च स्वसजातीयानां परस्परं भेदसाधक इति तत्रापि विशेषान्तरापेक्षा नास्त्येव। अतो विशेषे भेदसाधनाय विशेषान्तरापेक्षा नास्तीति नाऽनवस्थेति नीलकण्ठपण्डिताः।

मा० प्र० व्या०—नित्यसम्बन्धत्वम् समवायत्वम्। नित्यत्व-

सम्बन्धस्य संयोगस्य च निरासः। इह घटे घटत्वमिति प्रतीतिस्तत्र-प्रमाणम्। नैयायिकमते समवायः प्रत्यक्षः स चैकोनित्यश्च। नन्व-न्यान्यपि अन्धकारसुवर्णादीनि द्रव्याणि सन्ति आलस्यादयो गुणा अपि सन्ति कथं नवैवेत्यादि। मैवम्, अन्धकारो न द्रव्यम्। किन्तु तेजोऽभावः सुवर्णं तेज एव आलस्यं कृत्यभाव एव। एवमन्यदपि बोध्यम्।

अभावो द्विविधः संसर्गाभावोऽन्योन्याभावश्च। आद्यस्त्रिविधः प्रागभावः ध्वंसः अत्यन्ताभावश्च। प्रागभावो विनाशी अजन्यः ध्वंसो-जन्यः अविनाशी च। अत्यन्ताभावाऽन्योन्याभावौत्वजन्याववि-नाशिनौ योग्यानुपलब्ध्याऽभावः प्रत्यक्षः अन्यत्राऽतीन्द्रियः।

अथ प्रमा कथ्यते सा चतुर्विधा प्रत्यक्षानुमितप्रममितिशाब्द-

---

मात्रोक्ता वाकाशेसम्बन्धत्वत्रमात्रोक्तौ संयोगादौ चातिव्याप्तिरत उभ-योर्निवेश:। सम्बन्धश्चात्र सम्बन्धिभिन्नो ग्राह्यः। तत्रेदं कारणम्। नित्यसम्बन्धत्वस्य लक्षणत्वे द्रव्यत्वाभावादीनां स्वात्मकस्वरूप-सम्बन्धेऽतिव्याप्तिः तद्वारणाय सम्बन्धिभिन्नत्वमिति। एवञ्च सम्बन्ध-प्रतियोग्यनुयोगिभिन्नत्वे सति नित्यत्वे सति सम्बन्धत्वम् समवाय-स्य लक्षणम्। अत्र द्रव्यत्वाभावादीनां लाघवात् द्रव्यत्वाभावादि-रेक एव सम्बन्धः। घटादीनां महाकाले कालिकसम्बन्धो लाघवादेक एव महाकाल इति स्वरूपसम्बन्धस्य क्वचित् प्रतियोगरूपता क्वचि-च्चानुयोगिरूपतेति विभागः।

प्रौढप्रकाशकतेजः सामान्याभावो हि तमः सुवर्णं तैजसं अत्यन्ता-नलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वाद्यन्नैवं तन्नैवं यथा जलम्। आलस्यं कृत्यभावः।

मा० प्र० व्या०—समवायसामानाधिकरण्याऽन्यतरसम्बन्धावच्छि-न्न सत्तात्वावच्छिन्नप्रतियोगिताकाभावत्वमभावत्वमिति दिनकरी। अनादिः साऽन्तः प्रागभावः सादिरनन्तः प्रध्वंसाभावः अत्यन्ताभावा-ऽन्योन्याभावौ अजन्यावविनाशिनौ इति कथनादुत्पादविनाशशाली कश्चिदन्योऽभावः स्वीक्रियत इति मतं निरस्तम्।

अभावप्रत्यक्षन्तु योग्यानुपलब्ध्या भवति। योग्यानुपलब्धिश्च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा।

मा० प्र० व्या०—तद्वद्विशेष्यकत्वे सति तत्प्रकारकज्ञानत्वं प्रमा-

भेदात् । तत्करणानि चत्वारि—प्रत्यक्षानुमानोपमानशब्दभेदात् । तत्र प्रत्यक्षं द्विविधम्–निर्विकल्पकं सविकल्पकं च । प्रत्यक्षकरणानि षडिन्द्रियाणि । घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि । एतानि सन्निकर्षसहितानि प्रत्यक्षं जनयन्ति । सन्निकर्षश्च लौकिकोऽलौकिकश्च । अलौकिकस्त्रिविधः ज्ञानलक्षणा, सामान्यलक्षणा, योगजश्च ।

लौकिकः षड्विधः संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेषणता चेति । संयोगेन द्रव्यग्रहः संयुक्तसमवायेन शब्दान्यगुणकर्मद्रव्यवृत्तिजातीनां प्रत्यक्षं, संयुक्तसमवेतसमवायेन शब्दमात्रवृत्तिजातीतरगुणवृत्तिकर्मवृत्तिजातीनां प्रत्यक्षं, समवायेन शब्दस्य, समवेतसमवायेन शब्दवृत्तिजातीनां, विशेषणतयाऽभावस्य, समवायस्य च प्रत्यक्षम् ।

---

त्वम् । एतादृशज्ञानत्वं यद्यपि स्मृतौ भवति तथापि यथार्थानुभवकरणत्वस्यैव प्रमाणत्वाङ्गीकारात् न तज्जनके प्रमाणत्वप्रसङ्ग इति चत्वार्येव प्रमाणानि । तानि प्रत्यक्षानुमानोपमानशब्दाः उक्तश्च न्यायसूत्रे । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । प्रकारत्वविशेष्यत्वससर्गत्वानिरूपकं किञ्चिदिदमिति वस्तुमात्रावगाहि ज्ञानं निर्विकल्पकम् । प्रकारत्वविशेष्यत्वसंसर्गत्वनिरूपकं विशेषणविशेष्यभावावगाहिज्ञानं सविकल्पकम् । प्रत्यक्षज्ञानकरणानि मनस्सहितानिचक्षुरादीन्द्रियाणि । एतानि सन्निकर्षद्वारा प्रत्यक्षं जनयन्ति । अत एव तर्कसंग्रहे तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धमिति लिखितम् । सोऽयं सन्निकर्षः प्रत्यक्षज्ञानहेतुः अलौकिकलौकिकभेदेन द्विविधः । अलौकिकस्तावत्त्रिविधः । ज्ञानलक्षणादिक्रमेण । यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिः । सुरभिचन्दनमित्यत्र चन्दनस्य चाक्षुषत्वेऽपि सौरभस्यतु ज्ञानलक्षणयैव भानमित्येतस्य सन्निकर्षस्याङ्गीकारः। सामान्यलक्षणा तु सामान्यमेव प्रत्यासत्तिः । सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं न स्यादतस्तदङ्गीकारः । योगजधर्मप्रत्यासत्त्या योगिनां सर्वविषयकं ज्ञानम् ।

**मा० प्र० व्या०**—अयं घटः इत्यत्र अयं विशेष्यः घटत्वं प्रकारः । भासमानवैशिष्ट्यं तयोस्समवायः । तत्प्रतियोगिघटत्वम् । सविक-

अलौकिकः स यथा ज्ञानलक्षणया सुरभिचन्दनमिति चाक्षुषं ज्ञानं, सामान्यलक्षणया घटत्वेन रूपेण यावद्घटज्ञानं, योगजधर्मेण योगिनां सर्वज्ञानम्। तत्र निर्विकल्पकं विशेष्यत्वप्रकारत्वादिरहितं वस्तु स्वरूपमात्रज्ञानम् । सविकल्पकं सप्रकारकम् । भासमानवैशिष्ट्यप्रतियोगित्वम् प्रकारत्वम् ।

प्रामाण्यवादः--

तत्र परतः प्रामाण्यग्रह इति नैयायिकाः । यथाऽऽदौ घट इतिव्यवसायः ततो घटमहं जानामीत्यनुव्यवसायः। ततः प्रामाण्याप्रामाण्ये इति कोटिद्वयस्मरणम्। अथ चतुर्थे इदं ज्ञानं प्रमा न वेति प्रामाण्यसंशयः ततो विशेषदर्शनानन्तरं प्रामाण्यग्रहः। इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात्। ज्ञानान्तरवत्। स्वतः प्रामाण्यग्रह इति मीमांसकाः ।

---

ल्पकमेव विशिष्टज्ञानम्। यथाऽयं दण्डीत्यत्र दण्डत्वविशिष्टस्यवैशिष्ट्यं पुरुषे भासते । अथ प्रक्रिया--आदाविन्द्रिय सन्निकर्षात् घटघटत्वे इति निर्विकल्कम् ततोऽयं घट इति विशिष्टज्ञानम् ।

मा० प्र० व्या०--यदि ज्ञानस्य प्रामाण्यं स्वतो ग्राह्यं तदाऽनभ्यासदशापन्नज्ञाने प्रामाण्यसंशयो न स्यात्। तत्रहि यदि ज्ञानं जातं तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं संशयः। यदि तु ज्ञानं न ज्ञातं तर्हि धर्मिज्ञानाभावात् कथं संशयः। तस्मात् ज्ञाने प्रामाण्यमनुमेयम्। तथा हि इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वात्। यन्नैवं तन्नैवं यथाऽप्रमा। इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकंज्ञानत्वात्। एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात्। अत्र हेतुज्ञानस्य स्वतो ग्राह्यत्वाङ्गीकारात् तद्वद्विशेष्यकत्वेसति तत्प्रकारकत्वरूपप्रामाण्यस्य तु अनुमानादि नैव जायमानत्वान्नन्यायमतक्षतिः ।

मीमांसकास्तु स्वतएव ज्ञानगतं प्रामाण्यं गृह्यत इति वदन्ति । भाट्टाः मिश्राः प्राभाकरास्ते त्रयः। प्राभाकरा एव गुरवः। तषां मते ज्ञानं स्वप्रकाशम् । स्वविषयकत्वात् ।

तत्र गुरुमते अयं घट इति ज्ञानं विषयं आत्मानं ज्ञानप्रामाण्यञ्च गृह्णाति। मुरारिमिश्रमते अयं घट इति ज्ञानानन्तरं घटमहं जानामीत्यनुव्यवसायः तेनैव प्रामाण्यग्रहः। भट्टमते ज्ञानस्यातीन्द्रियत्वेन ज्ञानमनुमेयं यथा तथा तद्वृत्तिप्रामाण्यञ्च। तथाहि अयं घट इति ज्ञानानन्तरं घटे ज्ञातता उत्पद्यते। ततो ज्ञातो मया घट इति ज्ञातताप्रत्यक्षं ततो व्याप्त्यादिप्रत्यक्षानन्तरं ज्ञानानुमानं यथा अहं घटत्वप्रकारकज्ञानवान् घटत्वप्रकारकज्ञाततावत्त्वात् तावतैव तस्य धर्मधर्मिविषयकत्वेन प्रामाण्यानुमानमिति प्रत्यक्षनिरूपणम्।

## अथानुमानम्

अनुमित्युत्पत्तिप्रकारः—

अनुमितिकरणमनुमानम्। अनुमितित्वं जातिः। व्यापारवत् कारणं करणम्। व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः। हेतुज्ञानादिकरणम्। परामर्शोव्यापारः। परामर्शश्च व्याप्तिविशिष्ट-

---

मा० प्र० व्या०—अत्र ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावद्ज्ञानग्राहकसामग्रीग्राह्यमिति मीमांसकाः नेति नैयायिकाः। अस्यायमर्थः तदप्रामाण्याग्राहिका यावती या ज्ञानग्राहिका सामग्री तज्जन्योयोग्राहः तद्विषयत्वमिति। एतादृशग्रहः गुरुमते व्यवसायः मिश्रमतेऽनुव्यवसायः भट्टमते ज्ञातता लिङ्गकानुमितिः। तत्र गुरुमते सर्वस्मिन्नेव ज्ञानेमितिमातृमेयैतत्त्रितयं भासते। तन्मते घटत्वेन घटमहं जानामीत्याकारकस्यैव व्यवसायस्योत्पत्तेः। एवञ्च व्यवसायस्य स्वप्रकाशात्मकतया स्वेनैव स्वगतप्रामाण्यस्य ग्रहणाद् भवति प्रामण्यस्य स्वतो ग्राह्यत्वम्। प्रामाण्यस्य विशेषणत्वेन शब्दमर्यादयाऽनुपस्थितत्वेऽपि भानाङ्गीकारः तन्मते उपपद्यते।

मिश्रमतेऽयं घट इत्याकारकज्ञानानन्तरं घटत्वेन घटमहं जानामीत्याकारकज्ञानविषयलौकिकमानसमुत्पद्यते। तेन प्रामाण्यस्य ग्रहणम्। भट्टमते च ज्ञानस्यातीन्द्रियतया ज्ञातता लिङ्गकानुमितेरेव प्राथमिकज्ञानग्रहरूपतया तया प्रामाण्यं गृह्यते।

मा० प्र० व्या०—पक्षसाध्यविषयकं ज्ञानमनुमितिः। एतादृशानुमितिं प्रति करणं व्यापरवदसाधारणं कारणमनुमानम्। अनुमिति-

पक्षधर्मताज्ञानम् यथा वह्निव्याप्यधूमवानयमिति । आदौ महानसादौ धूमे वह्निसामानाधिकरण्यग्रहे सति धूमो वह्निव्याप्य इत्यनुभवो जायते। ततः कालान्तरे पर्वते धूमे दृष्टे सति व्याप्तिस्मरणं ततश्च व्याप्तिविशिष्टवैशिष्ट्यज्ञानं वह्निव्याप्यधूमवानयमिति तृतीयलिङ्गपरामर्शः। पक्षतासहितेन तेन पर्वतो वह्निमानित्यनुमितिर्जायते।

व्याप्तिनिरूपणम्—

व्याप्तिश्च हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरण्यम्। न च अयं संयोगवान् द्रव्यत्वादित्यत्र अव्याप्तिः। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमित्यर्थात्।

---

त्वं तु जातिः। अनुमितिकरणयोर्मध्ये यः परामर्शः स व्यापारः। लिङ्गज्ञानजन्यः लिङ्गज्ञानजन्याऽनुमितिजनकश्च। परामर्शश्च व्याप्तिप्रकारकपक्षधर्मताज्ञानम्। सच वह्निव्याप्यधूमवान् पर्वत इत्याकारकः। आदौ भूयोदर्शनेन महानसादौ वह्निधूमयोः सामानाधिकरण्यग्रहे जाते धूमो वह्निव्याप्य इत्यनुभवो जायते। ततः कालान्तरे पर्वते धूमे दृष्टे सति पूर्वानुभूतव्याप्तिस्मरणं ततश्च व्याप्तिविशिष्टवैशिष्ट्यावगाहि ज्ञानं परामर्शरूपं जायते। ततश्च पक्षता सहकारात् पर्वतो वह्निमानित्यनुमितिरुत्पद्यत इत्यनुमित्युत्पत्तिप्रकारः। अयञ्च स्वार्थानुमितिप्रकारः। न्यायप्रयोज्यानुमानं परार्थानुमानम्। न्यायत्वञ्चप्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम्। अवयवत्वञ्च प्रतिज्ञाद्यन्यतमत्वम्। तत्प्रकारश्चाग्रे वक्ष्यते।

मा० प्र० व्या० —व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं व्यापार इत्युक्तम्। तत्र व्याप्तिः केत्यपेक्षायां व्याप्तिश्चेत्यादिना तत्स्वरूपं निरूप्यते। बालबोधार्थं प्रधानसिद्धान्तव्याप्तिं निरूपयति हेतुसमानाधिकरणेत्यादिना। हेत्वधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यमित्यर्थः। पर्वतो वह्निमान् धूमादित्यत्र हेतु र्धूमः तदधिरणं पर्वतः तद्वृत्तिर्योऽत्यन्ताभावः घटात्यन्ताभावः तत्प्रतियोगी घटः अप्रतियोगी वह्निः तत्सामानाधिकरण्यं धूमेऽस्तीति लक्षणसमन्वयः। धूमवान् वह्नेरित्यत्र हेतुर्वह्निः तदधिकरणमयोगोलकं तद्वृत्तिर्योऽत्यन्ताभावः धूमात्यन्ताभावः तत्प्रतियोग्येव धूमः

पञ्चावयवनिरूपणम्--

**अनुमानं द्विविधं स्वार्थं परार्थं च तत्र परार्थं पञ्चावयवसाध्यम्। अवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि। यथा १ अयं वह्निमान् २ धूमात् ३ योयो धूमवान् स वह्निमान् यथामहानसम् ४ वह्निव्याप्यधूमवानयम् ५ तस्माद्वह्निमानिति। स्वार्थश्च स्वीयव्याप्त्यादिज्ञानसाध्यम् न तत्र परप्रतिपत्त्यर्थमत एवमाहशब्दप्रयोगम्।**

अनुमानत्रैविध्यम्---

**तच्चानुमानं त्रिविधम्। केवलान्वयिकेवलव्यतिरेकिअन्वय-**

---

साध्यः न त्वप्रतियोगीति नातिव्याप्तिः। संयोगवान् द्रव्यत्वादित्यत्र द्रव्यत्वाधिकरणेद्रव्ये किञ्चिदवच्छेदेन संयोगाभावस्यापि सत्वे तत्प्रतियोगित्वमेव साध्ये इत्यव्याप्तिरिति तद्वारणाय हेतुसमानाधिकरणेऽभावे प्रतियोगिवैयधिकरण्यं निवेशनीयमिति निरूपयति **प्रतियोगिव्यधिकरणेत्यादिना**। तथाचाऽत्राभावः प्रतियोगिसमानाधिकरणः व्यधिकरणस्तु घटाभावः तदप्रतियोगिसाध्यसामानाधिकरण्यमादाय न दोष इत्याशयः।

**मा० प्र० व्या०**--पूर्वोक्तमनुमानं स्वार्थपरार्थभेदेन द्विविधम्। स्वार्थं स्वानुमितिहेतुभूतमनुमानम्। परार्थं परस्य मध्यस्थस्य वा साध्यसंशयनिवृत्तिरूपमथवाऽनुमितिरूपं प्रयोजनं यस्मात्तत् परार्थानुमानम्। पञ्चावयवसाध्यमित्यनेन प्रतिज्ञाद्यवयवपञ्चकप्रयोज्यानुमानं परार्थानुमानमिति लभ्यते। प्रतिज्ञाद्यवयवपञ्चकसमुदायस्यैव न्यायत्वात्। साध्यवत्तया पक्षप्रतिपादकवचनं प्रतिज्ञा। पञ्चम्यन्तं लिङ्गप्रतिपादकं वाक्यं हेतुः। व्याप्तिप्रतिपादकं वचनमुदाहरणम्। व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः। हेतुसाध्यवत्तया पक्षप्रतिपादकवचनं निगमनम्। निगम्यन्ते अनेनार्थविशेषा इति निगमनम्। पक्षज्ञानं प्रतिज्ञाप्रयोजनम्। लिङ्गज्ञानं हेतुप्रयोजनम्। व्याप्तिज्ञानमुदाहरणप्रयोजनम्। पक्षधर्मता ज्ञानमुपनयप्रयोजनम्। अबाधितत्वादिकं निगमनप्रयोजनम्।

**मा० प्र० व्या०**—तदिदमनुमानं केवलान्वयि, केवलव्यतिरेकि अन्वयव्यतिरेकिभेदेन त्रिविधम्। केवलान्वयित्वञ्च व्यतिरेकव्या-

व्यतिरेकि भेदात्। यत्र साध्यव्यतिरेको न कुत्राप्यस्ति स केवलान्वयी। यथा घटोऽभिधेयः प्रमेयत्वादित्यत्र अभिधेयत्वस्य साध्यस्य व्यतिरेको न कुत्राप्यस्ति। यत्र साध्यप्रसिद्धिः पक्षातिरिक्ते नास्ति स केवलव्यतिरेकी यथा पृथिवी इतरेभ्योभिद्यते पृथिवीत्वात् [गन्धवत्त्वात्]।

यत्र साध्यं साध्याभावश्चान्यत्र प्रसिद्धः सोऽन्वयव्यतिरेकी। यथा पर्वतो वह्निमान् धूमादिति। अन्वयव्यतिरेकिणि हेतौ अवश्यं पञ्चरूपोपपन्नता अपेक्षणीया। पक्षवृत्तित्वं सपक्षसत्त्वं, विपक्षव्यावृत्तत्वं अबाधितत्वं असत्प्रतिपक्षितत्वं चेति पञ्चरूपाणि। केवलान्वयिनि विपक्षव्यावृत्तत्वरहितम्। केवलव्यतिरेकिणि सपक्षसत्त्वरहितं चतूरूपमेवाऽपेक्षितम्। यत्र साध्यसन्देहः सपक्षः यत्र साध्य-

---

प्तिशून्यत्वे सत्यन्वयव्याप्तिमत्वम्। हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः साध्याभावहेत्वभावयोर्व्यातिर्व्यतिरेकव्याप्तिः। घटोऽभिधेयः प्रमेयत्वादित्यत्र सर्वत्राऽप्यभिधेयत्वस्यैव सत्त्वे तदभावो न कुत्रापि प्रसिद्धयतीति व्यतिरेकव्याप्तिर्नास्ति। किन्तु केवलमन्वयव्याप्तिरेव। अतः केवलान्वयीति कथ्यतेऽनुमानम्। अत एवात्यन्ताभावाऽप्रतियोगिसाध्यकत्वं केवलान्वयित्वम्।

केवलव्यतिरेकित्वञ्चाऽन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वम्। पृथिवीतरेभ्यो भिद्यते गन्धवत्वादित्यत्र पृथिव्याः सर्वस्या अपि पक्षत्वात् पक्षातिरिक्ते कुत्रापि इतरभेदो न प्रसिद्ध्यति। किन्तु यदितरभेदाभाववत् न तद् गन्धवत् यथा जलमिति व्यतिरेकदृष्टान्तवशेन व्यतिरेकव्याप्तिमात्रम्। अतो व्यतिरेक्यनुमानम्। तथा च इतरभेदाभावव्यापकीभूतगन्धाभावप्रतियोगिगन्धवती पृथिवोति परामर्शात् पृथिवीतरभिन्नेत्यनुमित्युत्पत्तिः। अत्र साध्याभावो व्याप्यः हेत्वभावो व्यापकः।

**मा० प्र० व्या०**—पर्वतो वह्निमान् धूमादित्यत्र साध्यं महानसादौ साध्याभावश्च ह्रदादौ प्रसिद्ध इत्यत्र हेतौ अन्वयव्याप्तेः व्यतिरेकव्याप्तेश्च सत्वात् इदमनुमानमन्वयव्यतिरेकि। अन्वयव्याप्तिमत्वे सति व्यतिरेकव्याप्तिमत्त्वं अन्वयव्यतिरेकित्वम्। अन्वयव्यतिरेकिणि हेतौ पञ्चरूपाण्युपलभ्यन्ते। केवलव्यतिरेकिणि केवलान्वयिनि च विपक्षासत्वरहितं सपक्षसत्वरहितं चतूरुपमेवाऽऽपेक्ष्यते। पक्षो नाम साध्यप्रकारकसन्देहविशेष्यः साध्यप्रकारको यः सन्देहः पर्वतो

निश्चयः स सपक्षः यत्र साध्याभावनिश्चयः स विपक्षः । साध्याभाववान् पक्षो बाधः । साध्यविरोधिसाधको हेतुः सत्प्रतिपक्षः ।

उपाधिनिरूपणम्—

सोपाधौ पक्षसपक्षासत्त्वाद्यन्यतमभङ्ग आवश्यकः । सोपाधिश्च स्वव्यभिचारितासम्बन्धेन उपाधिविशिष्टः । उपाधिश्च त्रिविधः । १ साधनाव्यापकत्वे सति शुद्धसाध्यव्यापकः २ साधनाऽव्यापकत्वेसति पक्षधर्मावच्छिन्नसाध्यव्यापकः । ३ साधनाव्यापकत्वेसति साधनावच्छिन्नसाध्यव्यापकश्च । आद्योयथाऽयोगोलकं धूमव द्वह्नेरित्यत्र आर्द्रेन्धनप्रभववद्वह्निमत्वमुपाधिः साधनाऽव्यापकत्वे सति शुद्धसाध्यव्यापकः ।

द्वितीयो यथा वायुः प्रत्यक्षः प्रत्यक्षास्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्य-

---

वह्निमान् वा नवेत्यात्मकः तद्विशेष्यत्वं पर्वते इति पर्वतः पक्षः । साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम् । ह्रदो वह्न्यभाववानित्याकारकनिश्चयविशेष्यत्वं ह्रदे इति ह्रदो विपक्षः । साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् । महानसंवह्निमदित्याकारकनिश्चयविशेष्यत्वं महानसेऽस्तीति महानसं सपक्षः ।

**मा० प्र० व्या०** – उपाधिस्त्रिविधः जगदीशभट्टाचार्याणां सम्मतः । तत्राऽऽद्यः साधनाऽव्यापकत्वे सति शुद्धसाध्यव्यापकः । अयोगोलकं धूमवद् वह्नेरित्यत्र आर्द्रेन्धनप्रभववद्वह्निमत्वमुपाधिः । अत्र साधनं वह्निः तदधिकरणमयोगोलकम् तद्वृत्तिर्धूम इति साधनाव्यापकत्वम् । एवं पर्वते धूमस्य सत्वात्तत्राऽऽर्द्रेन्धनप्रभववद्वह्निमत्वस्य तद्व्यापकत्वात् केवलसाध्यव्यापकत्वमप्यस्योपपन्नमित्यस्य तथात्वम् ।

वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्वमुपाधिः ।

वस्तुतः यो यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाव्यापकः स तदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिः ।

**मा० प्र० व्या०**—उपाधिव्यभिचारेण साध्यव्यभिचारानुमानमुपाधेः प्रयोजनम् । तथाहि यत्र शुद्धसाध्यव्यापकः उपाधिः तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा धूमवान् वह्ने-

त्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्वमुपाधिः। तृतीयो यथा ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वमुपाधिः।

हेत्वाभासनिरूपणम्—

अथ हेत्वाभासाः कथ्यन्ते। सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्ध-बाधिताः पञ्चहेत्वाभासाः। सव्यभिचारस्त्रिविधः साधारणाऽसाधारणानुपसंहारिभेदात्। साध्याभाववद्वृत्तित्वं साधारणत्वम्। यथा धूमवान् वह्नेः। सकलसपक्षव्यावृत्तत्वमसाधारणत्वम्। यथा पर्वतो वह्निमान् पर्वतत्वात्। सर्वपक्षकत्वम् अनुपसंहारित्वम्। यथा सर्वं प्रमेयं अभिधेयत्वात्। साध्याभावव्याप्तो विरुद्धः।

---

रित्यत्र वह्निर्धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वात्। व्यापक-व्यभिचारिणो व्याप्यव्यभिचारस्यावश्यकत्वात्। यत्र तु किञ्चिद्-धर्मावच्छिन्नसाध्यव्यापक उपाधिः तत्र तद्धर्मवत्युपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्। यथा स श्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वं श्यामत्वव्यभिचारि। मित्रातनये शाकपाकजत्वव्य-भिचारित्वात्। यस्य तूपाधेः साध्यव्यापकत्वादिकं सन्दिह्यते स सन्दिग्धोपाधिः।

**मा० प्र० व्या०**—हेतोराभासाः हेत्वाभासा इत्युक्ते हेतुगतदोषा इत्यर्थः। हेतुवदाऽऽभासन्ते हेत्वाभासा इत्युक्ते दुष्टहेतव इत्यर्थः। इतः प्राक् व्याप्तिपक्षधर्मता सहितसद्धेतुनिरूपणं कृतम्। अथेदानी-मसद्धेतवो निरूप्यन्ते। तल्लक्षणन्तु यद्विषयकत्वेन ज्ञानस्याऽनुमिति-तत्करणान्यतरप्रतिबन्धकत्वं तत्त्वम्। व्यभिचारादिविषयकत्वेन लिङ्गज्ञानस्याऽनुमितितत्करणान्यतरप्रतिबन्धकत्वस्य सत्वाल्लक्षण-समन्वयः।

सव्यभिचारोऽयं त्रिविधः साधारणाऽसाधारणानुपसंहारिभेदात्। साधारणत्वञ्च साध्याभाववद्वृत्तित्वम्। हेतोः साध्याभाववद्-वृत्तित्वे ज्ञाते साध्याभाववदवृत्तित्वज्ञानरूपव्याप्तिज्ञानप्रतिबन्धः फलम्। सकलसपक्षव्यावृत्तत्वमसाधारणत्वम्। पर्वतो वह्निमान् पर्वतत्वादित्युक्ते पर्वतत्वस्य पक्षातिरिक्तेसपक्षे कुत्राप्यसत्वात् अन्वयव्याप्तेरनुत्पत्तिः फलम्। व्यतिरेकव्याप्तिस्तु भवत्येव। तत्र प्रतिबन्धो न जायत इति तत्त्वम्।

यथा घटो नित्यः सावयवत्वात्। सत्प्रतिपक्षो यथा पर्वतो वह्निमान् धूमात् पर्वतो वह्न्यभाववान् महानसान्यत्वात्। असिद्धः त्रिविधः। आश्रयासिद्धो व्याप्यत्वासिद्धः स्वरूपासिद्धश्च। यत्र पक्षोऽसन् सिद्धसाधनो वा स आश्रयासिद्धः। यथा शशविषाणं नित्यं अजन्यत्वात्। शरीरं हस्तादिवत् हस्तादिमत्तया प्रतीयमानत्वात्।

यत्र पक्षावृत्तिर्हेतुः स स्वरूपासिद्धः। यथा पर्वतो वह्निमान् महानसत्वात्। स च विशेषणासिद्धविशेष्यासिद्धभागासिद्धभेदेन बहुविधः। आद्यो यथा शब्दः अनित्यः चाक्षुषत्वे सति जन्यत्वात्। द्वितीयो यथा शब्दोऽनित्यः गुणत्वे सति परमाणुवृत्तित्वात्। तृतीयो यथा एतानि द्रव्याणि निरवयवत्वात्। सोपाधिर्व्याप्यत्वाऽसिद्धः। यथा धूमवान् वह्नेः। बाधो यथा जलह्रदो वह्निमान् द्रव्यत्वात्। तेनैतद्दोषरहितो हेतुः सद्धेतुः। इत्यनुमानं व्याख्यातम्॥

---

मा० प्र० व्या० – घटो नित्यः सावयवत्वादित्यत्र सावयवत्वमनित्यत्वेन साध्याभावेन व्याप्तम्। तथाचात्र घटे नित्यत्वसाध्यकव्याप्तिज्ञानप्रतिबन्धः फलम्। यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः। पर्वते धूमरूपहेतुर्वह्निमत्तां साधयति। महानसान्यत्वरूपहेतुः वह्न्यभाववत्तां साधयति तदा धूमरूपहेतुः सत्प्रतिपक्षः भवति। सन् प्रतिपक्षः यस्यासौ सत्प्रतिपक्षः। अथवा साध्याभावव्याप्यप्रतिहेतुमत्पक्षः सत्प्रतिपक्षः। असिद्धस्त्रिविधः। आश्रयासिद्धो नाम पक्षे पक्षतावच्छेदकाभावः, पक्षतावच्छेदकाभाववत् पक्षो वा। काञ्चनमयपर्वतो वह्निमानित्यत्र पर्वते काञ्चनमयत्वस्य कुत्राप्यभावात् आश्रयासिद्धिः। आश्रयासिद्धिरियं यस्य हेतोः सः आश्रयासिद्धः।

मा० प्र० व्या०—हेत्वाभाववत् पक्षः स्वरूपाऽसिद्धः। शब्दोऽनित्यः चाक्षुषत्वादित्यत्र चाक्षुषत्वं शब्दे नास्ति। सच स्वरूपासिद्धोविशेषणासिद्धादिभेदेन बहुविधः। तत्र शब्दोऽनित्यः चाक्षुषत्वे सति जन्यत्वादित्युक्ते जन्यत्वरूपविशेष्यस्य सत्वेऽपि चाक्षुषत्वस्याऽभावात् विशेषणासिद्ध इति। एवं गुणत्वे सति परमाणुवृत्तित्वहेतौ गुणत्वस्य सत्वेऽपि परमाणुवृत्तित्वस्याभावात् विशेष्यासिद्ध इति।

निरवयवत्वहेतौ सावयवद्रव्यनिरूपितवृत्तित्वं नास्ति। परमाण्वादिषु सत्वाद्भागासिद्ध इति। साध्याभाववत्पक्षो बाधः।

## उपमानम्

### उपमित्युत्पत्तिप्रकारः

उपमितिकरणमुपमानम्। कीदृशो गवय इति प्रश्ने गोसदृशो

---

बाधसत्प्रतिपक्षावनुमितिप्रतिबन्धकौ। अन्ये व्याप्तिज्ञानप्रतिबन्धकाः अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन अनुमितिविषयीभूतं यत् साध्यं तदभावनिश्चयत्वेन अनुमितिं प्रति प्रतिबन्धकत्वमित्याशयः। सत्प्रतिपक्षस्तु विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकः। व्यभिचारादिग्रहाणां मध्ये साधारणस्य अव्यभिचाराभाववत्तया प्रतिबन्धकत्वम्। हेतौ साध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदके हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारतया तद्ग्रहस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावरूपः योऽव्यभिचारः तद्ग्रहप्रतिबन्धकत्वम्। हेतौ साध्याभाववद्वृत्तित्वप्रकारकग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वं तु मणिमन्त्रादिन्यायेन। विरुद्धस्य समानाधिकरणाभाववत्तया। व्याप्यत्वासिद्धस्य विशिष्टव्याप्याभाववत्तया प्रतिबन्धकत्वम्। विशिष्टव्यप्त्यभाववत्तया नाम हेतुव्यापकतावच्छेदकं साध्यतावच्छेदकावच्छिन्नसामानाधिकरणाभावरूपतया। असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम्। हेतौ असाधारण्यादिज्ञानदशायां हेतुसाध्ययोः सामानाधिकरण्यनिश्चयाऽसम्भवेन पक्षान्तर्भावेन च साध्यसंशयत्वेन व्याप्तिसंशयसम्भवान्न व्यप्तिनिश्चय इति प्राचीनमतमनुसृत्य। आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम्। पक्षे पक्षतावच्छेदकविरहस्य हेतुविरहस्य च निश्चयदशायां हेतौ पक्षतावच्छेदकविशिष्टपक्षवृत्तित्वग्रहासम्भवादिति। उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः। सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धावन्तर्भवतीति जगदीशभट्टाचार्यैरपि कण्ठत उक्तमेव। परमिदं संशयपक्षतावादिप्राचोनमत एव शोभते। तत्र पक्षतायाः साध्यसंशयरूपत्वेन साध्यनिश्चयस्य तद्विघटकत्वात्।

**मा० प्र० व्या०**—संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। संज्ञा पदं संज्ञि अर्थः। तयोस्सम्बन्धज्ञानमुपमितिः। शक्तिपरिच्छित्तिरूपाहचु-

गवय इत्युत्तरिते यदा गोसदृशं प्राणिनं पश्यति तदा पूर्वोक्तं वाक्यार्थं स्मरति। अनन्तरं अयं गवयपदवाच्य इति शक्तिग्रहः। सेयमुपमितिः।

आप्तोक्तः शब्दः प्रमाणम्। प्रकृतवाक्यार्थगोचरयथार्थज्ञानवानाप्तः। पदज्ञानं करणम्। पदार्थोपस्थितिर्व्यापारः। आकांक्षायोग्यतासत्तितात्पर्यज्ञानानि सहकारीणि। फल शाब्दबोधः'

स्वरूपयोग्यत्वे सत्यजनिताऽन्वयन्बोधकत्वमाकांक्षा। तेन घटः कर्मत्वं आनयनं कृतिः इत्यत्र नाऽन्वयबोधः। स्वरूपाऽयोग्यत्वात्। अयमेति पुत्रोराज्ञः पुरुषोऽपसार्यतामित्यत्रराज्ञः पुरुष इति नाऽन्वय-

---

पमितिः। उपमितेर्लक्षणं तु उपमिनोमीत्यनुव्यवसायगम्योपमितित्वमेव। अत्र गोसदृशप्राणिदर्शनानन्तरं अतिदेशवाक्यार्थस्मरणं जायते। नीलकण्ठपण्डितास्त्वन्नम्भट्टग्रन्थमनुसृत्य स्मरणं सादृश्यदर्शनजन्यं उद्बोधकान्तरजन्यं वा। उभयमपि सादृश्यदर्शनस्य सहकारि। न तु सादृश्यदर्शनजन्यमेव सहकारीति वदन्ति। प्राञ्चस्तु वाक्यार्थं स्मरन्नित्यत्र तर्कसंग्रहपङ्क्तौ वर्तमानसामीप्ये, प्रत्यय इति वाक्यार्थं स्मरिष्यन्नित्यर्थं कुर्वन्ति। एवञ्च वाक्यार्थस्मरणरूपसादृश्यदर्शनजन्यतालाभेन व्यापारतालाभ इत्याहुः। शक्तिग्रहोऽप्ययं गवयपदवाच्य इत्येव। केचित्तु गवयो गवयपदवाच्य इति स्वीकुर्वन्ति।

मा० प्र० व्या०—आप्तोक्तत्वे सति शब्दत्वं प्रमाणशब्दस्य लक्षणम्। अस्यायं निष्कर्षः। प्रकृतवाक्यार्थगोचरयथार्थज्ञानजन्यवाक्यत्वमिति। वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वात् लक्षणस्य सङ्गतिः। शाब्दबुद्धित्वञ्च पदार्थद्वयसंसर्गावगाहिबुद्धित्वम्। शाब्दबोधे पदज्ञानं करणम्। पदजन्यपदार्थोपस्थितिर्व्यापारः। शाब्दबोधः फलम्। पदजन्यपदार्थोपस्थितिर्वृत्तिज्ञानसहकृता बोद्धव्या। तेन घटशब्दादाकाशोपस्थितौ नाऽऽकाशविषयकशाब्दबोधप्रसङ्गः। तादृश स्मरणस्य एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति विधयैव सम्भवात् तत्र वृत्तेरसहकारात् नाऽऽकाशविषयकशाब्दबोधप्रसङ्गः।

मा० प्र० व्या०—पयसा सिञ्चतीत्यत्र स्वरूपयोग्यत्वं वर्तते एवमजनितान्वयबोधकत्वमप्यस्तीत्याकांक्षा वर्तते। अत्र स्वरूपयोग्यत्वस्यानिवेशे घटः कर्मत्वं आनयनं कृतिऽरित्यत्राऽजनितान्वयबोधकत्वस्य सत्वात् शाब्दबोधाऽऽपत्तिः। अतः स्वरूपयोग्यत्वनिवेशः।

बोधः। पुत्रेण जनिताऽन्वयबोधकत्वात्। बाधकप्रमाविरहोयोग्यता। तेन वह्निनासिञ्चतीत्यत्रनाऽन्वयबोधः।

अव्यवधानेन अन्वयप्रतियोग्युपस्थितिरासत्तिः तेन गिरिर्भुक्तं वह्निमान् देवदत्तेनेत्यत्र नाऽन्वयबोधः। तत्तदर्थप्रतीतीच्छयोच्चरितत्वं तात्पर्यम्। तेन भोजनप्रकरणादौ सैन्धवमानयेत्युक्ते अश्वान्वयबोधो न भवति।

शक्तेर्लक्षणायाश्च निरूपणम् —

वृत्त्याविना शब्देन नाऽन्वयबोधो जन्यते। वृत्तिर्द्विविधा शक्तिर्लक्षणाच। शक्तिर्घटादिपदस्य घटादौ। लक्षणा यथा गङ्गायां घोषः प्रति

---

तदभावान्नापत्तिः। तन्मात्रोक्तावयमेति पुत्रः राज्ञः पुरुषोऽपसार्यतामित्यत्र राज्ञः पुरुष इति अन्वयबोधप्रसङ्गः। तद्वारणायाऽजनितान्वयबोधकत्वनिवेशः। तेन राजपदार्थस्य पुत्रेण जनिताऽन्वयबोधकत्वान्नाऽऽपत्तिः योग्यता च बाधकप्रमाविरहः। पयसा सिञ्चतीत्यत्रैव बाधकप्रमाविरहात् पयःकरणकत्ववत्सेचनमिति बोधः। वह्निना सिञ्चतीत्यत्र तु सेचने वह्निकरणकत्वं प्रत्यक्षबाधितमिति न तत्र शाब्दबोधः।

**मा० प्र० व्या०**—अव्यवधानेन अन्वयप्रतियोग्युपस्थितेरभावात् न गिरिर्भुक्तं वह्निमान् देवदत्तेनेत्यस्माच्छाब्दबोधापत्तिः। केचित्तु पदविशेषजन्यपदार्थोपस्थितिरूपाऽऽसत्तिरिति वदन्ति। तात्पर्यञ्च तत्तदर्थप्रतीतीच्छयोच्चरितत्वम्। तेन भोजनादौ सैन्धवमानयेत्युक्ते तत्प्रकरणानुसारेण नाऽश्वविषयकशाब्दबोधः। किन्तु लवणविषयक एव। अस्य तात्पर्यस्य वृत्तित्वं तु नास्ति नैयायिकमते। केचित्तु दार्शनिकाः तस्य वृत्तित्वमपि स्वीकुर्वन्ति। तदिदं न संगच्छते। पदार्थोपस्थितिव्यापारकः संकेतो वृत्तिः। तात्पर्यज्ञानन्तु वृत्त्युपस्थापितपदार्थे एव प्रकरणादिना ( वक्तृतात्पर्यं ) निश्चिनोतीति न पदार्थमुपस्थापयति पृथगिति न वृत्तिरित्याशयः। अन्नम्भट्टास्तु तात्पर्यस्य शाब्दबोधसामग्रीमध्ये न गणयन्ति।

**मा० प्र० व्या०**—वृत्तित्वञ्च शाब्दबोधजनकाऽर्थोपस्थितिजनकज्ञानविषयसम्बन्धत्वम्। तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति वृत्ति-

वसतीत्यत्र गङ्गापदार्थे प्रवाहे घोषान्वयानुपपत्त्या गङ्गा पदस्यतीरे लक्षणा कथ्यते ।

गौणीवृत्तिरपि लक्षणैव । यथाऽग्निर्माणवकः गौर्वाहीकः अत्र-लक्षणयाऽग्न्यादि सादृश्यं प्रतीयते ।

शक्तं पदं चतुर्विधम् । यौगिकं, रूढं, योगरूढं, यौगिकरूढं च । आद्यं यथा पाचकादिपदं योगार्थे पाककर्तरि शक्यम् । द्वितीयं यथा

---

ज्ञानसहकृततत्पदजन्यतत्पदार्थोपस्थितिः कारणमिति सूचयितुं वृत्त्या विनेति ग्रन्थमारभते । व्यञ्जनाया वृत्तित्वं न सम्मतमिति सूचयितुं द्विविधेति । शक्तिश्च "अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारिका ईश्वरेच्छा । लक्षणा तु शक्यसम्बन्धः । गङ्गायां घोष इत्युक्ते गङ्गापदार्थप्रवाहे घोषस्य वृत्तित्वं अनुपपन्नमिति गङ्गापदेन प्रवाहसम्बन्धितीरं लक्षणयोपस्थाप्यते । तथा च गङ्गातीरनिरूपितवृत्तितावान् घोष इत्यर्थ उपलभ्यते । तात्पर्यस्यापि वृत्तित्वं नास्ति । वृत्त्युपस्थापितपदार्थे एव प्रकरणादिना वक्तृतात्पर्यविबोधेन शाब्दबोधे पदार्थभानात् ।

मा० प्र० व्या०—अन्वयानुपपत्तिस्तात्पर्यानुपपत्तिश्च पृथक्-पृथक् लक्षणाबीजम् । वाक्ये शक्तेरेवाभावाल्लक्षणा नैयायिकैर्नोपेयते । लक्ष्यमाणगुणसम्बन्धरूपा गौण्यपि लक्षणैव । अत्रायमाशयः ननु गङ्गायां घोष इत्यत्र तीरे शक्यरूपप्रवाहस्येव अग्निर्माणवक इत्यादौ माणवके शक्यस्याग्नेः साक्षात्सम्बन्धो न सम्भवतीति कथं लक्षणया निर्वाह इत्याशङ्कायां समाधत्ते गौणीवृत्तिरपीति । लक्ष्यमाणो यो गुणः शुचित्वादिः तत्सम्बन्धरूपा गौणी । स च सम्बन्धः क्वचित्साक्षात्सम्बन्धः क्वचित् परम्परासम्बन्धः । एवञ्च शक्यस्याग्नेः स्वनिष्ठशुचित्ववत्तासम्बन्ध एव लक्षणेत्यर्थः । एवं गौर्वाहीक इत्यत्रापि । व्यञ्जना तु अनुमानादिनाऽन्यथासिद्धेति न तस्या वृत्तिमध्ये परिगणनम् । तात्पर्यन्तु तत्प्रतीतीच्छयोच्चरितत्वम् ।

मा० प्र० व्या०—शक्त्याऽर्थबोधकपदं विभजते—शक्तमिति यत्राऽवयवार्थं एव बुद्ध्यते तद्यौगिकम् । यथा पचतीति पाककर्ता पाचकशब्देन बोद्ध्यते । यत्राऽवयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण

विप्रादिपदं रूढ्या ब्राह्मणवाचकम्। तृतीयं यथा पङ्कजादिपदं योगरूढ्या पङ्कजनिकर्तृत्वेन पद्मत्वेन च पद्मवाचकम्। चतुर्थं यथा उद्भिदादिपदम् यौगिकं तरुगुल्मादेः, रूढं यागविशेषस्य वाचकम्।

लक्षणा द्विविधा। जहत्स्वार्था अजहत्स्वार्था च। आद्या यथा गङ्गायां घोष इत्यादौ। द्वितीया यथा सर्वे छत्रिणो यान्तीत्यादौ। अत्र छत्रिणः तदितरस्यापि गमनान्वयः।

अथ शाब्दबोधप्रक्रिया—

देवदत्तो ग्रामं गच्छतीत्यत्र ग्रामकर्मकगमनजनकवर्तमानकृतिमानित्यन्वयबोधः। द्वितीयाया अर्थः कर्मत्वम्। धातोर्गमनं जनकत्वं

---

बुद्ध्यते तद्रूढम्। यथा विप्रादिपदम्। अत्राऽवयवशक्त्या नेदं ब्राह्मणवाचकम्। किन्तु समुदायशक्त्यैव। यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम्। यथा पङ्कजादिपदम्। पङ्कजनिकर्तृत्वेन पद्मत्वेन च पङ्कजपदं पद्मं बोधयति। अत्र केवल अवयवशक्त्याकुमुदबोधो न भवति। रूढिज्ञानस्य केवलयौगिकार्थज्ञानप्रतिबन्धकत्वात्। यौगिकरूढं तु योगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधकम्। यथा उद्भिदादिपदम्।

**मा० प्र० व्या०**—यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा। गङ्गायां घोष इत्यत्र प्रवाहस्य घोषे साक्षादन्वयो नास्ति। अतोऽत्र लक्षणा जहल्लक्षणा। यत्र वाच्यार्थस्याप्यन्वयः तत्र अजहल्लक्षणा। यथा छत्रिणो यान्तीत्यादौ। एकसार्थवाहित्वेन छत्र्यच्छत्रिणोर्गमनाऽन्वयबोधकमिदम्। एवं काकेभ्यो दधि रक्ष्यतामित्यत्रापि दध्युपघातकत्वेन काकाकाकरूपार्थबोधकं काकपदमजहल्लक्षणया। अत्रैतैः जहदजहल्लक्षणा न स्वीकृता एतादृशमेव मतं नीलकण्ठ्यां नीलकण्ठपण्डिता अपि दर्शयन्ति परेत्वित्यादिना। तथा हि "परेतु घटो नित्य इत्यादौ घटत्वस्येव सोऽयं देवदत्त इत्यादौ तत्तांशस्योपलक्षणतयाभाने न किञ्चिद्बाधकमिति किं जहदजहल्लक्षणयेति" वदन्तीति।

**मा० प्र० व्या०**—संसर्गमर्यादालभ्य इति शाब्देबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया लभ्यते। घटमित्युक्ते घटनिष्ठ-

संसर्गमर्यादालब्धम् लटो वर्तमानत्वं, आख्यातस्य कृतिः तत्संसर्गः संसर्गमर्यादालभ्यः ।

यत्र कर्तरि कृतेर्बाधः तत्र आख्यातस्य [व्यापारादौ लक्षणा । यथा रथोगच्छतीत्यत्र गमनजनकवर्तमान व्यापारवान् रथः । दधि पश्यतीत्यादौ द्वितीयालोपस्थले दधिशब्द एवाऽजहत्स्वार्थलक्षणया दधिकर्मत्वं बोधयति । एकवचनाद्युपस्थापितमेकत्वादि सर्वत्र प्रथमादिपदमुपस्थापयति ।

लुङोऽर्थ उत्पत्तिर्भूतत्वञ्च । भूतत्वमतीतत्वम् । तच्चोत्पत्तावन्वेति । तथा च विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वं लब्धम् । लिटोऽनद्यतनत्वं परोक्षत्वम् अतीतत्वंचार्थः। तदन्वयः पूर्ववदुत्पत्तौ । लङोऽनद्यतनत्वमतीतत्वं चार्थः । विधिलिङोऽर्थः कृतिसाध्यत्वे सति बलवदनिष्टाजनकेष्टसाधनत्वम् । स्वर्गकामो यजेतेत्यादौ कृतिसाध्यबलवदनिष्टाजनकेष्टसाधनयागकर्ता स्वर्गकाम इत्यर्थः । आशीर्लिङ्लोटोरर्थः वक्त्रिच्छाविषयत्वम् । तेन घटमानयेत्यत्र घटकर्मकयदिच्छाविषयानयनानुकूलकृतिमान् त्वमित्यन्वयबोधः ।

---

कर्मत्वमिति बोधः जायते । तत्र कर्मत्वबोधिका द्वितीया वर्तते घटरूपार्थबोधकं घटपदं च वर्तते । निष्ठत्वार्थबोधकं पदं तु नास्ति । पदजन्यपदार्थोपस्थितेः शाब्दबोधे कारणत्वात् तद्बोधकपदस्य च प्रकृतेऽभावात् कथं निष्ठत्वविषयकः शाब्दबोध इत्युक्ते शाब्दबोधे चेत्यादिना गदाधरभट्टै र्व्युत्पत्तिवादारम्भे कथितम् । तथाच एकपदार्थेऽपरपदार्थस्य संसर्गः पदजन्यपदार्थोपस्थितिं विनैव संसर्गमर्यादया भासत इत्यर्थः सिद्धो भवति ।

मा० प्र० व्या०—यद्यप्याऽऽख्यातस्य कृतिरर्थः तथापि यत्र अचेतने कृतेरभावः तत्र आख्यातस्य लक्षणया व्यापारोऽर्थः वक्तव्यः । एवञ्च गमनानुकूलव्यापारवान् रथ इत्यन्वयबोधउपपद्यते । रथे व्यापारस्तु अबाधितः । दधि पश्यतीत्यादौ दधिपदोत्तरद्वितीया लुप्ता । तर्हि कथं कर्मत्वं बोद्धव्यत इति शङ्कायां अजहत्स्वार्थलक्षणया दधिशब्दः दधिकर्मत्वमुपस्थापयति । तथा च दधिकर्मकदर्शनानुकूलकृतिमानित्यन्वयबोधः ।

मा० प्र० व्या०—लुङोऽर्थं इति । अपाक्षीदित्यादौ अद्यतनत्वमपि लुङोऽर्थो बोद्धव्यः । तेन वर्तमानकालवृत्तिध्वंसप्रतियोग्यद्यतनपाक-

व्याप्यक्रियया व्यापकक्रियाया आपादनं लृङोऽर्थः। तात्पर्यवशात्कचिद्भूतत्वं कचिद्भविष्यत्वञ्च लृङा बोध्यते।

देवदत्तेन गम्यते ग्राम इत्यस्य देवदत्तवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम इत्यर्थः। वृत्तित्वं संसर्गबललभ्यं, तृतीयार्थश्च कृतिः। जन्यत्वं संसर्गः गमनं धात्वर्थः। जन्यत्वं संसर्गः फलं कर्मात्मनेपदार्थः। शालित्वं संसर्गः। भावप्रत्यये तु देवदत्तेन सुप्यत इत्यस्य देवदत्तवृत्तिकृतिजन्यः स्वाप इत्यर्थः। भावप्रत्ययस्थले फलाभावात् आत्मनेपदार्थो न भासते। भविष्यत्वं लृटोऽर्थः। तच्च विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वम्। तेन गमिष्यतीन्यत्र विद्यमानप्रागभावप्रतियोग्युत्पत्तिकगमनानुकूलकृतिमानित्यर्थः। लुटोऽर्थः अनद्यतनत्वमपि।

सनः कर्तुरिच्छा अर्थः। सन्नुत्तराख्यातस्य आश्रयत्वेलक्षणा। सविषयकार्थकप्रकृतिकाख्यातस्य आश्रयत्वे लक्षणायाः घटं जानातीत्यादौ क्लृप्तत्वात्। यङोऽर्थः पौनः पुन्यं तत्त्वं च तदानीन्तनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्तमानादिकृतिविषयत्वम्। पापच्यत इत्यादौ तादृशकालीनत्वमेव यङा प्रत्याय्यते। आख्यातस्य चरमदलवाचकत्वात् न विशिष्टवाचकत्वं यङः। तदानीन्तनत्वञ्च स्थूलकालमादाय।

पूर्वकालीनत्वं कर्ता च क्त्वार्थः। पूर्वत्वं च सन्निहितक्रियापेक्षया

---

कृतिमानिति तज्जन्यबोधः लिटोऽनद्यतनत्वमिति—मनश्चचालेत्यादौ अतीतकालवृत्ति अतीन्द्रियचलनवन्मन इत्याकारको बोधः।

मा० प्र० व्या०—अनद्यतनत्वमपीति—धात्वर्थे श्वस्तनत्वस्य बोधिकातिङ्लुडुच्यते। तदेवाऽनद्यतनत्वं प्रकृतेऽभिमतम्।

मा० प्र० व्या०—धात्वंशप्रत्ययः नामप्रकृतिकः धातुप्रकृतिकश्चेति द्विविधः तत्राऽऽदिमो नामप्रकृतिकः क्यच्क्यङादिः। अपरो धातुप्रकृतिकः सन् यङादिः। तत्र सनः कर्तुरिच्छैवार्थ इति—पाकं चिकीर्षति ओदनं बुभुक्षते इत्यादौ इच्छायां द्वितीयान्तेन लभ्यस्य पाकादिविशेष्यताकत्वस्य स्वरूपसम्बन्धेन, धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारिनिष्ठस्वसमानकर्तृकत्वसम्बन्धेनाऽन्वयात् पाकधर्मिका निरुक्तसम्बन्धेन कृतिमती या इच्छा तद्वानिति बोधः।

मा० प्र० व्या०—सविशेषणे हीति न्यायादिति। सविशेषणे

बोद्धव्यम् । तत्पूर्वकालीनत्वं तत्प्रागभावकालवृत्तित्वम् । तदुत्पत्तिकालीनध्वंसप्रतियोगि—कालवृत्तित्वं वा । तेन भुक्त्वा व्रजतीत्यत्र गमनप्रागभावावच्छिन्नकालवृत्तिभोजनकर्त्रभिन्नः व्रजतीत्यर्थः । समानविभक्तिकृतामभेदेन धर्मिवाचकत्वात् । अव्ययत्वेन क्त्वापदविभक्तिलोपात् । कालः तात्पर्यवशात् व्यवहिताव्यवहितसाधारणो बोद्धव्यः । तेन पूर्वस्मिन्नब्दे गत्वाऽस्मिन्नब्दे समागतः इत्येतादृशप्रयोगसङ्गतिः । इच्छावान् तुमुलोऽर्थः । भोक्तुं व्रजतीत्यस्य भोजनेच्छावान् व्रजतीत्यर्थः । भोक्तुमिच्छतीत्यत्र तु कर्तरि लक्षणा । भोजनकर्तारमात्मानमिच्छतीत्यर्थः । सविशेषणे हीतिन्यायात् विशेषणे कृताविच्छान्वयः ।

प्रकृतधात्वर्थकर्ता शतृशानचोः धात्वर्थजन्यफलवान् कर्मशानचोऽर्थः शत्रादीनां कर्तावाच्यः । सविषयकार्थकप्रकृतिकानां आश्रयत्वेलक्षणा । एवं कर्तृकर्मकृतां तेन तेन रूपेण कर्ता कर्म च वाच्यम् । भावकृतां तु नञ्स्वादीनां प्रयोगसाधुत्वमात्रम् । धात्वर्थानतिरिक्तस्य भावकृताऽनुपस्थापनात् ।

ननु नीलं घटमानयेत्यादौ द्वितीयाद्वयश्रवणात् कर्मद्वयबोधापत्तिः । नतु विशिष्टस्य कर्मत्वमिति चेत्, न अत्र विशेषणविभक्तिः साधुत्वाय । अथवा विशेषणविभक्तेरभेदोऽर्थः । अत्रायं विशेषः—द्वितीयपक्षे वाक्यसमासयोः पर्यायता न घटते । वाक्ये नीलं घट मित्यादौ अभेदस्य पदार्थत्वेन प्रकारत्वात् न संसर्गत्वम् । नीलघटमित्यादौ कर्मधारये लक्षणाया अस्वीकारेण अभेदस्याऽपदार्थत्वेन संसर्गत्वात् ।

तथा च वाक्यसमासयोः पर्यायानुरोधेन षष्ठीसमासे राजपुरुष इत्यादौ षष्ठ्यर्थसम्बन्धे लक्षणा न घटते । सम्बन्धस्य संसर्गमर्यादालभ्यत्वात् ।

---

हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामत इति न्यायादित्यर्थः ।

मा० प्र० व्या०—पर्यायत्वञ्च समानार्थबोधकत्वे सति भिन्नाऽनुपूर्वीमत्पदत्वम् ।

इति तर्कामृते आञ्जनेयशास्त्रिविरचिता माणिक्यप्रभा व्याख्या ॥



वस्तुतस्तु विरुद्धविभक्त्यनवरुद्धस्य अभेदबोधकत्वव्युत्पत्तेः मुख्यार्थराजाभेदस्य बाधेन राजपदस्य राजसम्बन्धिनि लक्षणा। एवं बहुव्रीहौ चरमपदस्यान्यपदार्थे लक्षणा।

एवं नञर्थोऽभावः अघटं भूतलमित्यादौ घटभिन्ने लक्षणा। न कलञ्जं भक्षयेदित्यादौ बलवदनिष्टाजनके लक्षणा।

क्रियासङ्गतस्यैवकारस्य अत्यन्तायोगव्यवच्छेदोऽर्थः। यथा नीलं सरोजं भवत्येव। विशेषणसङ्गतस्य अयोगव्यवच्छेदः। यथा शङ्खः पाण्डुर एव। विशेष्यसङ्गतस्य अन्ययोगव्यवच्छेदः। यथा पार्थ एव धनुर्धर इत्यादौ। एवं दिशा सर्वत्र बोद्धव्यम्।

इति श्रीजगदीशभट्टाचार्यप्रणीतं तर्कामृतम्॥



